॥ श्रीः ॥


हरिदास-संस्कृत-ग्रन्थमाला

४१

महाकवि-श्रीकालिदासप्रणीतम्

# अभिज्ञानशाकुन्तलम्

## नाटकम् ।

अद्वैतवादव्रत-श्रीविम्बाधरकर व्याकरणसांख्यवेदान्ततीर्थाऽ-
नुगृहीत-कवि-तार्किकोत्कल-दार्शनिक—

**यास्कश्रीनवकिशोरकर**

काव्य-व्याकरणतीर्थ-काव्यसाहित्यशास्त्राचार्य्य-न्याय-वैशेषिक-
वेदान्तशास्त्रिप्रणीतया **'किशोरकेलि'** समाख्यया
व्याख्यया विजृम्भितम् ।

साहित्यशास्त्रिपदवीजुषा श्रीरामतेजपाण्डेयेन विदुषाऽभिहितेन 'रुचिरा'-
भिधानभाषानुवादेन विभासितं; तेनैव च संशोधितम् ।



प्रकाशकः—
जयकृष्णदास हरिदासगुप्तः—
**चौखम्बा संस्कृत सीरिज़ आफिस,**
बनारस सिटी ।

[ राजसंस्करणम् ]    [ वि० सं० १९९२

# भूमिका

नत्वा शिवं साम्बमूर्त्तिं सुरैरनिशमीडितम् ।
कालिदासस्य भारत्यां भूमिकाल्पा प्रकाश्यते ॥ १ ॥
बहवो विबुधा यस्य नानाशास्त्रविचक्षणाः ।
जन्मकालस्थितौ सम्यग् विव[illegible]न्ते परस्परम् ॥ २ ॥

अथ धर्म्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थसम्पत्तिर्हि शब्दार्थज्ञानधीनेति न[illegible]स्यापि तत्र विशेषा विप्रतिपत्तिः । शब्दार्थज्ञानं हि शक्तिग्रहाधीनम् । शक्ति[illegible]हश्च—

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
सांनिध्यतःसिद्धपदस्य वृद्धाः वाक्यस्य शेषाद्विवृतेर्वदन्ति ॥"

इत्यभि[illegible]क्तोक्त्या व्यवहारत एव निर्दोषप्रयोगहेतुर्भवति । केवलकोषस्यैव [illegible]क्तिग्राहकत्वे "वा पुंसि पद्मम्" इत्यमरसिंहवचनात् पुंलिङ्गपद्मशब्दप्रयोगस्य केवल[illegible]याकरणस्यैव शक्तिग्राहकत्वे "हन हिंसागत्योः" इति गत्यर्थकस्य हन्तेः प्रयोग[illegible]यापत्तिः । परन्तु "भ[illegible]ः सरोवरे" "कुञ्जं हन्ति कृशोदरी" इत्यादौ दोषो [illegible]वेश्वनाथादिभिः प्रदर्शितः । व्यवहारज्ञानञ्च काव्यादेव नान्यतः । उक्तं हि [illegible]म्मटेन—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृत्तये कान्तासम्मिततयोपदेशयुजे ॥" इति ।

किं ? तत् काव्यमित्यत्राह भोजनरेन्द्रः—

"अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिं च विन्दति ॥" इति ।

काव्यप्रकाश[illegible]म्मटैस्तु तदेवाङ्गीकृतम्, यद्धि—"तददोषौ शब्दार्थौ [illegible]गुणावनलंकृती पुनः क्वा[illegible] इति तत्रोक्तम् । ध्वनिरात्मा काव्यस्येति ध्वनि-

# भूमिका ।

म् । रीतिरात्मा काव्यस्येति वामनसम्मतम् । "वक्रोक्तिः काव्यजीवि-
वक्रोक्तिजीवितकारैरङ्गीकृतम् । तासु तास्वालंकारिकगोष्ठीषु विवदमा-
ात्मसु "वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इत्याग्नेयपुराणोक्त-
ारिकशिरोमणिना विश्वनाथपादेन—

"वाक्यं रसात्मकं काव्यम्"

तं काव्यस्वरूपं तत्तन्मतखण्डनपूर्वकं सुनिरूपितम् । रसगङ्गाधरकारेण
भावनपुरःसरं तद्दूषितमिति यथा यस्मै रोचते स तद्गृह्णीयादित्यास्तामत्र
। तद्धि काव्यं द्विविधं दृश्यश्रव्यत्वभेदाभ्याम् । तदुक्तं दर्पणकृता;—

"दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्" इति ।

दृश्यं तत्राभिनेयं तत्रैव च रूपकसंज्ञेति तेनैवाभिहितम्, तद्धि रूपकं दश-
धम्—

"नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
इहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥"

इति तस्यैवोक्तेः । नाट्यलक्षणन्तु—

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥
सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्या कार्य्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमानन्तु बन्धनं तस्य कीर्त्तितम् ॥

इति दर्पणे सुस्पष्टं प्रकाशितमस्ति । एवं द्विविधस्यापि काव्यस्य नानाफलक-
स्य विस्तरेऽस्मिन् संसारपरिसरे व्यवहारवित्त्याद्यर्थमध्ययनाध्यापनादिविधौ प्रचुरत-
रप्रचारो दरीदृश्यते । तदपि काव्यं द्विविधं सदसद्भेदेन । सत्काव्यं हि सद्विषयो-

पदेशेन सतामसतां वा विपुलं पुण्यं समुत्पाद्य मोक्षादिविधौ प्रवर्त्तकं भवति । असत्काव्यञ्च असद्विषयविज्ञापनेनासत्पक्षेषु मानसं परिचालयत्परिणामे कुम्भिपाकादिभीषणोत्पातानुपजनयति । पठितेनापि सत्काव्येन प्राणवतेव प्रबोधिता बुद्धिः छतरां निर्वाणकालोपनतामिव विमलतामुपलभमाना संसारसारभूतं पुण्यमुपार्जयति । तत्प्रणायकानाञ्च कविमुख्यानामनन्ता कीर्त्तिसन्ततिस्तथा दिगन्तेषु विस्तीर्य्यते, तदुक्तं--"कालिदासादीनामिव यशः" । इति, यस्याः किल कीर्त्तेः शैलसागरादिसमवरोधेनापि प्रतिनिवृत्तिर्नैव सम्भवित्रीति । तथा चालंकारिकास्तत्तदनुभवेन विज्ञातनिखिलतत्त्वा इति गायन्ति ;—यद्धि

"धर्म्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्तिं प्रीतिञ्च साधु काव्यनिषेवणम् ॥" इति ।

सन्ति च "संसारविषवृक्षस्ये"त्यादिकानि बहून्येव प्रमाणानि काव्यप्रकर्षे । तदलम्प्रकृतविषयस्यातितरामनुकूलं विषयं दूरे स्थापयितुमप्रकृतविषयाणामतिमात्रपर्य्यालोचनेन । सत्स्वपि बहुलेषु काव्येषु सत्स्वपि च तत्प्रणायकेषु बहुष्वपि कविमुख्येषु प्रसादगुणगुम्फितस्य वैदर्भीरीतिनियन्त्रितस्याद्यरसरञ्जितस्य कविकुलगौरवरविणा तत्रभवता साक्षाद्भारतीपुत्रेणेव कालिदासेनाभिहितस्य केरलकामिन्याः कुन्तलस्येवाभिज्ञानशकुन्तलस्य चमत्कृतिः कस्य मनो नाकर्षति । यस्य किल कवित्वरसेन प्लुतमानसा मनीषिणः सहसा कमपि भावभेदमाप्नुवन्तः कठोरदुःखेस्वपि चित्तशान्तिमुपगच्छन्तो भारतीदेव्या नवीनमिव भावं प्रत्यक्षीकुर्वन्तः स्वकर्त्तव्येषु रसाभिभवेन प्रमाद्यन्ति । जागरिता अपि जगदिदं स्वप्ने संवेद्यमानमिव जानन्ति । मुहूर्त्तमात्रेण च जीवलोकान्निर्वास्यमानाः कुत्रचिदलौकिके लोके समुपतिष्ठमानाः काव्यवर्णितमलौकिकं भावजातं चक्षुषेव पश्यन्ति । सहृदयहृदयास्वादकन्दभूतस्य यस्य किलाभिज्ञानशकुन्तलाभिनेयस्यास्तितया प्रविरलप्रचारबलाद्दुर्बलाऽपि सुरभारती सबलेव वेदमध्यगतया निरसापि सरसेव कठोरतर्काकुलिततया विकलापि सकलेव व्याकृतियुक्ताप्याकृतिमतीव स्मृतिपथगेव विस्मृतिं गताऽपि भुवस्तले सविपक्षापि सपक्षेव परिचलति । यस्य च शृङ्गाररसतरङ्गमज्जनेन प्रक्षालितपलितशिरस्त्वादिर्वृद्धोऽपि क्षणं तरुणायते । परुषमपि ब्रह्मचारिजनहृदयं शृङ्गारैकतानं प्रियवस्तुप्रवणतामवलम्बते च ।

आहुश्च केचन रसिकाः;—

कालिदासकविता नवं वयो
माहिषं दधि सशर्करं पयः ।
एणिमांसमबला सुकोमला
सम्भवन्तु मम जन्म जन्मनि ॥

यस्य च कवेः करुणरसप्रयोगनैपुण्येन मुहूर्त्तमपि जन्मावधिकरुणभावमविजानतो नितरां कठोरमप्यन्तःकरणं करुणरसमयकूपे निमज्जति । प्रकाश्यते एवास्य कवेः करुण-रसवर्णनचातुरी शकुन्तलायाः प्रस्थानकौतुकेऽभिज्ञानस्य तुरीयाङ्के । वदन्ति च केचन कारुणिकाः;—

"कालिदासस्य सर्वस्वमभिज्ञानशकुन्तलम् ।
तत्राऽपि च चतुर्थोऽङ्को यत्र याति शकुन्तला ॥"

किञ्च रतिविलापाजविलापादौ करुणचातुरी समुपचितेति नाविदितमेव काव्य-वेदिभिः । शृङ्गारचातुरी तु कवेः सर्वत्र परिस्फुटैवेति तत्र वा किं ब्रूमः ? । कविरय-मुपमाप्रिय इति के वा न जानन्ति । वदन्ति च तद्वेदिनः ;—

"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
नैषधे पदमाधुर्य्यं माघे सन्ति त्रयो गुणाः" ॥ इति ।

दार्शनिकत्वञ्चास्याभिज्ञानशकुन्तलनान्दीपाठादेवावगम्यते । "श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्" इत्युक्त्याऽऽकाशस्य शब्दगुणकत्वव्यापकत्वयोः प्रतिपा-दितत्वात् कणभुजोऽपि तथैवाङ्गीकारात् । तत्रैव "प्रत्यक्षाभिः प्रपन्नः" इति मीमांसकमतावलम्बनेन कालवियतोः प्रत्यक्षत्वाङ्गीकाराच्च । आहुश्च कौमारिलाः;—

"कर्म्मदिक्कालवियतां प्रत्यक्षज्ञानगम्यता" । इति ।

अथायं कवीश्वरः कदा कुहचिच्च प्रान्ते जनुरधत्त तत्र बहवो बहुप्रकारैर्विप्रति-पद्यन्ते कवीश्वरेण च स्वयं स्वविषये किमपि नोपन्यस्तम् । ऐहिकनश्वरसुखविमुखा-नां मोक्षरूपपरमपुरुषार्थपथमात्रप्रपीत्सूनां मुनीनामिव प्राचीनानामार्य्याणां केवल-दृष्टान्तप्रदर्शनद्वारेण लेशत एवैहिकसुखसम्पत्तिसाधनफलकेषु खल्वैतिह्यविषयेषु नासीन्मनागपि प्रयासः । ते किल नानाविधोपाख्यानसरसीकृतेषु कर्म्मयोगोपयो-गिषु स्मृत्युपनिषत्पुराणादिषु निबन्धेषु स्वस्वशेमुषीं परिचालयन्तः कालं यापय-

न्ति स्म। तस्मादस्माकमत्र भारत वर्षे इतिहासानामभावो भागवतादिमहापुराणानाञ्च सद्भावः परिलक्ष्यते। महाकविना च यत्किञ्चिन्निरूपितं तत् स्वल्पं तदपि दुर्लभम्। तस्य च काव्ये आत्मप्रतिष्ठाया लेशोऽपि नास्ति। यतः स तत्रभवान् स्वभावतो विनयावनत आसीत्।

तस्य विनीतत्वञ्च—

"क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनाऽस्मि सागरम्॥"
"मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम्।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥"
"अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः॥"

इत्यादिरघुकाव्यपद्येभ्योऽवगम्यत एव। कादम्बरीकर्त्ता वाणभट्टो हर्षचरिते—

"निर्गतासु न वा कस्य कालिदासस्य सुक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते॥"

इत्युक्त्या महाकवेरस्य कवित्वं प्रशशंस। वाणभट्टः सप्तमशताब्दीकालस्य मध्यभागे भुवस्तले विरराज। कुमारिलभट्टोऽपि स्वतन्त्रे तन्त्रवार्त्तिके—

"सतां हि सन्देहपदेषु वस्तुषु।
प्रमाणमन्तःकरणप्रवृत्तयः॥"

इति शकुन्तलपद्यमुधृत्य "प्रसिद्धिरूपं कविभिर्निरूपितम्" इति वाक्यपरिपोषणार्थं कालिदासं सस्मार। दण्डयाचार्य्येण च काव्यादर्शप्रथमेऽध्याये—

"प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति।
लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः॥"

इति कालिदासकवितायास्तृतीयं चरणमुदाहृत्य प्रसादगुणो व्याख्यातः। तथा हि पूर्वोक्तप्रमाणकलापैः खृष्टतृतीयशताब्दीकालात्परवर्त्ती पञ्चमशताब्दीकालशेषात् पूर्ववर्त्ती कालो महाकवेः कालिदासस्याविर्भावकाल इति कैश्चिद्गवेषकैर्निरूपितोऽक्रमस्ति। अध्यापक-कार्ण—म्याक्समूलार—भायिदाजि—महामहोपाध्यायहरप्रसादशास्त्रिप्रभृतयः प्रत्नतत्त्वविदो महाकविकालिदासस्याविर्भावकालः खृष्टीयषष्ठशता-

ब्दीकाल इति समालोचयन्ति । भारतीयजनश्रुतिरेव तेषां समालोचनाया मूल-भित्तिः । मालवदेशान्तःपातिन्यामुज्जयिनीनामराजधान्यां सर्वगुणाधारो विक्रमा-दित्यो नाम नृपवर आसीत्--

"मत्तोऽधुना कृतिरियं सति मालवेन्द्रे ।
श्रीविक्रमार्कनृपराजवरे समासीत् ॥"
"यद्राजधान्युज्जयिनी महापुरी ।
सदा महाकालमहेशयोगिनी ॥"

इति ज्योतिर्विदाभरणोक्तेः । तस्य च राज्ञो धन्वन्तरिप्रभृतयो रत्नभूता नवसङ्ख्यकाः पण्डिताः सभासदो बभूवुः । तेषु महाकविः कालिदासोऽप्येकं रत्नमासीत् । तथाचोक्तं ज्योतिर्विदाभरणे—

"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥" इति ।

खृष्टजन्माव्यवहितपूर्वशताब्दीकालो विक्रमादित्यस्य काल इति ते एव वर्णय-न्ति । तस्मात् स एव कालो महाकवेः कालिदासस्याविर्भावकाल इति कथञ्चित मन्तव्यम् ।

विहारोत्कल जार्णाल—( *Bihar Orissa Journ~l* ) भिन्सेण्ट-स्मिथ ( *Vincent Smith* ) प्रभृतयो महामहोपाध्यायहरप्रसादशास्त्रिणश्च मालवदेशस्थमन्दसोर ( प्राचीनदशपुर ) नामकं प्रसिद्धनगरं तन्निकटवर्त्ति किञ्चित् पुण्यस्थानं वा महाकवेर्जन्मभूमिरिति निपुणं वदन्ति ।

केचित् वदन्ति वङ्गेऽस्य जन्म मालवदेशके ।
मगधे विबुधाश्चान्ये मिथिलायां परेऽधुना ॥ ३ ॥

तथा हि विक्रमसभायां सदस्यतया नवरत्नानामेकं रत्नं कालिदास आसीत् । एवमेव भोजप्रबन्धादौ भोजसभायां कालिदासस्य वर्णनाद्भोजसमयेऽपि कश्चित् कालिदासोऽपेक्ष्यते । एवमन्येऽपि कालिदासाः सन्ति ध्रुवं सम्भाव्यन्ते ।

राजशेखरोऽप्येवमेवाह;--

"एकोऽपि जीयते हन्त ! कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ? ॥" इति ।

सम्प्रति हि कालिदासकृतत्वेन बहवो ग्रन्थाः समुल्लसन्ति । तेषु प्रधानतमाः-- रघुवंशं कुमारसम्भवं मेघदूतं शकुन्तलं विक्रमोर्वशीयं मालविकाग्निमित्रम् ऋतुसंहारं पुष्पवाणविलासश्चेति ग्रन्था एकस्यैव कालिदासस्येति सम्भाव्यते ।

तेषु तेषु ग्रन्थनिकरेषु 'अभिज्ञानशकुन्तलं' नाटकं चरमोत्कर्षसीमायामस्तीति सुव्यक्तम् । सम्भवतो नाटकमिदं कविना शेषजीवने निरमायि ।

नाटकेऽस्मिन् धीरोदात्तो दक्षिणो नायको दुष्मन्तः । तृतीयाङ्कपर्य्यन्तं शकुन्तला कन्या मुग्धा च, ततः परं स्वकीया मध्या च नायिका । विप्रलम्भश्रृङ्गारः प्रधानरसः वीरकरुणादयो गौणभूतरसाः । विप्रलम्भश्रृङ्गारस्तु गान्धर्वविवाहात् प्राक् पूर्वरागात्मकः, ततः परं प्रवासरूपः । प्राचुर्य्येणात्र प्रसादो गुणः वैदर्भी रीतिश्च ।

एवंविधगुणोपेतं कालिदासशेमुषीशेषसीमभूतं पेशलमिदं रूपकमस्माकमङ्गवङ्गोत्कलमध्यसंयुक्तप्रान्तादिविविधसंस्कृतपरीक्षानिर्णायकाधिनायकैरनेकैः पाश्चात्त्यशिक्षापरिषदामधीश्वरैश्च साहित्यादिकक्षापरीक्षायां पाठ्यत्वेन पर्य्यरक्षत । अतोऽस्माभिस्तत् किशोरकेलिसहकृतं हिन्द्यनुवादविलसितं समेषां सौकर्य्याय प्राकाश्यं नीतम् । तत्र स्वयं कृतायाः किशोरकेलिसमाख्याया व्याख्यायाः स्वमुखेन प्रशंसा मास्तु ।

अनेकदिनतट्टीकालेखनकर्म्मणि व्यापृतस्य मम शरीरासुस्थतया 'पूर्वभागे'ऽस्मिन् संस्करणेऽनिरूपितं विस्तृतसमालोचनादिकं 'परभागे' संस्करणे प्रकाश्येतेति क्षम्यतां क्षमाराधनधनैः ।

हेमाननीयविबुधाः ! कृतशास्त्रचर्चाः !
यद्यत्र लेखनगता मम दोषसंघाः ।
जाता भवद्भिरनिशं परिमार्जनीया
दोषान्धरन्ति महतामपि ये तु धूर्त्ताः ॥ ४ ॥

जगन्नाथस्य रथयात्रा वि० सं० १९९२

निवेदकः—
कवि–तार्किक–दार्शनिकोत्कल—
यास्क–श्रीनवकिशोरकरः ।



॥ श्रीः ॥

“मर्त्यैरसर्वविदुरैर्विहितेकनाम
ग्रन्थेस्ति दोषविरहः सुचिरन्तनेपि ?”

॥ श्रीः ॥

### महाभारतीयं

# शकुन्तलोपाख्यानम् ।

जनमेजय उवाच ।

त्वत्तः श्रुतमिदं ब्रह्मन्! देवदानवरक्षसाम् । अंशावतरणं सम्यग् गन्धर्वाप्सरसां तथा ॥
इमन्तु भूय इच्छामि कुरूणां वंशमादितः । कथ्यमानं त्वया विप्र ! विप्रर्षिगणसन्निधौ ॥
पौरवाणां वंशकरो दुष्मन्तो नाम वीर्य्यवान् । पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ! ॥

वैशम्पायन उवाच ।

चतुर्भागं भुवः कृत्स्नं सोऽभुङ्क्त मनुजेश्वरः । समुद्रावरणांश्चापि देशान् स समितिञ्जयः ॥
आम्लेच्छाटविकान् सर्वानभुङ्क्त रिपुमर्द्दनः । रत्नाकरसमुद्रान्तांश्चतुर्वर्णसमावृतान् ॥
न वर्णसङ्करकरो न कृष्याकरकृज्जनः । न पापकृत् कश्चिदासीत् तस्मिन् राजनि शाशति ॥
धर्म्यां रतिं सेवमाना धर्मार्थावभिपेदिरे । तदा नरा नरव्याघ्र ! तस्मिन् जनपदेश्वरे ॥
नासीच्चौरभयं तात ! न क्षुधाभयमण्वपि । नासीद् व्याधिभयञ्चापि तस्मिन् जनपदेश्वरे ॥
स्वैर्धर्मैं रेमिरे वर्णा दैवे कर्मणि निस्पृहाः । तमाश्रित्य महीपालमासंश्चैवाकुतोभयाः ॥
कालवर्षी च पर्जन्यः शस्यानि रसवन्ति च । सर्वरत्नसमृद्धा च मही पशुमती तथा ॥
स्वकर्मनिरता विप्रा नानृतं तेषु विद्यते । स चाद्भूतमहावीर्य्यो वज्रसंहननो युवा ॥
उद्यम्य मन्दरं दोर्भ्यां वहेत् सवनकाननम् । चतुस्पथगदायुद्धे सर्वप्रहरणेषु च ॥
नागपृष्ठेऽश्वपृष्ठे च बभूव परिनिष्ठितः । बले विष्णुसमश्चासीत् तेजसा भास्करोपमः ॥
अक्षोभ्यत्वेऽर्णवसमः सहिष्णुत्वे धरासमः । सम्मतः स महीपालः प्रसन्नपुरराष्ट्रवान् ॥
भूयो धर्मपरैर्भावैर्मुदितं जनमादिशत् ॥

जनमेजय उवाच ।

सम्भवं भरतस्याहं चरितञ्च महामतेः । शकुन्तलायाश्चोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः ॥
दुष्मन्तेन च वीरेण यथा प्राप्ता शकुन्तला । तं वै पुरुषसिंहस्य भगवन्! विस्तरं त्वहम् ॥
श्रोतुमिच्छामि तत्त्वज्ञ ! सर्वं मतिमतांवर ! ॥

वैशम्पायन उवाच ।

स कदाचिन्महाबाहुः प्रभूतबलवाहनः । वनं जगाम गहनं हयनागशतैर्वृतः ॥

बलेन चतुरङ्गेण वृतः परमवल्गुना । खड्गशक्तिधरैर्वीरैर्गदामुषलधारिभिः ॥
प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः । सिंहनादैश्च योधानां शङ्खदुन्दुभिनिस्वनैः ॥
रथनेमिस्वनैश्चापि सनागवरबृंहितैः ॥
नानायुधधरैश्चापि नानावेशधरैस्तथा । हेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः ॥
आसीत् किलकिलाशब्दस्तस्मिन् गच्छति पार्थिवे । प्रासादवरशृङ्गस्थाः परया नृपशोभया ॥
ददृशुस्तं स्त्रियस्तत्र शूरमात्मयशस्करम् । शक्रोपमममित्रघ्नं परवारणवारणम् ॥
पश्यन्तः स्त्रीगणास्तत्र वज्रपाणिं स्म मेनिरे । अयं स पुरुषव्याघ्रो रणे वसुपराक्रमः ॥
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः । इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपम् ॥
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्द्धनि । तत्र तत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः ॥
निर्ययौ परमप्रीत्या वनं मृगजिघांसया । तं देवराजप्रतिमं मत्तवारणधूर्गतम् ॥
द्विजक्षत्रियविट्शूद्रा निर्यान्तमनुजग्मिरे । ददृशुर्वर्द्धयानास्ते आशिर्भिश्च जयेन च ॥
सुदूरमनुजग्मुस्तं पौरा जानपदास्तथा । न्यवर्त्तन्तः ततः पश्चादनुज्ञाता नृपेण ह ॥
सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः । महीमापूरयामास घोषेण त्रिदिव तथा ॥
स गच्छन् ददृशे धीमान् नन्दनप्रतिमं वनम् । बिल्वार्कखदिराकीर्णं कपित्थधवशङ्कुलम् ॥
विषमं पर्वतप्रस्तैरश्मिभिश्च समावृतम् । निर्जलं निर्मनुष्यञ्च बहुयोजनमायतम् ॥
मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः । तद्वनं मनुजव्याघ्र ! सभृत्यबलवाहनः ॥
लोड़यामास दुष्मन्तः सूदयन् विविधान् मृगान् । बाणगोचरसम्प्राप्तांस्तत्र व्याघ्रगणान्बहून् ॥
पातायामास दुष्मन्तो निर्बिभेद च सायकैः । दूरस्थान् सायकैः कांश्चिदभिनत् स नराधिपः ॥
अभ्यासमागातांश्चान्यान् खड्गेन निरकृन्तत । कांश्चिदेणान्समाजघ्ने शक्त्या शक्तिमतांवरः ॥
गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः । तोमरैरसिभिश्चापि गदामुषलकम्पनैः ॥
चचार स विनिघ्नन् वै वन्यांस्तत्र मृगद्विजान् । राज्ञा चाद्भुतवीर्य्येण योधैश्च समरप्रियैः ॥
लोड्यमानं महारण्यं त्यजन्ति स्म मृगाधिपाः । तत्र विद्रुतयूथानि हतयूथपतीनि च ॥
मृगयूथान्यथौत्सुक्याच्छब्दांश्चक्रुस्ततस्ततः । शुष्काश्चापि नदीर्गत्वा जलनैराश्यकर्षिताः ॥
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः । क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि ॥
केचित् तत्र नरव्याघ्रै रभक्ष्यन्त बुभुक्षितैः । केचिदग्निमथोत्पाद्य संसाध्य च वनेचरान् ॥
भक्षयन्ति च मांसानि प्रकुट्य विधिवत् तदा । तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः ॥
शङ्कोच्याग्रकरान् भीताः प्रद्रवन्ति स्म वेगिताः । शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु ॥
वन्या गजवरास्तत्र ममृदुर्मनुजान् बहून् । तद्वनं बलमेघेन शरधारेण संवृतम् ॥

व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपम् ॥

वैशम्पायन उवाच ।

ततो मृगसहस्राणि हत्वा सबलवाहनः । राजामृगप्रसङ्गेन वनमन्यद् विवेश ह ॥
एक एवोत्तमबलः क्षुत्पिपासासमन्वितः । स वनस्यान्तमासाद्य महच्छून्यं समासदत् ॥
तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम् । मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥
शीतमारुतसंयुक्तं जगामान्यन्महद्वनम् । पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ॥
विपुलं मधुरारावैर्नादितं विहगैस्तथा । पुंस्कोकिलनिनादैश्च झिल्लीकगणनादितम् ॥
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम् । षट्पदाघूर्णितलतं लक्ष्म्या परमया युतम् ॥
नाऽपुष्पःपादपःकश्चिन्नाऽफलो नापि कण्टकी। षट्पदैर्नाप्यपाकीर्णस्तस्मिन् वै काननेऽभवत्
विहगैर्नादितं पुष्पैरलङ्कृतमतीव च । सर्वर्त्तुकुसुमैर्वृक्षैरतीव सुखशाद्वलम् ॥
मानोरमं महेष्वासो विवेश वनमुत्तमम् । मारुताकलितास्तत्र द्रुमाः कुसुमशालिनः ॥
पुष्पवृष्टीर्विचित्रास्तु व्यसृजंस्ते पुनः पुनः। दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वनैः ॥
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः । तेषां तत्र प्रवालेषु पुष्पभारावनामिषु ॥
रुवन्ति रावान् मधुरान् षट्पदा मधुलिप्सवः । तत्र प्रदेशांश्च बहून् कुसुमोत्करमण्डितान् ॥
लतागृहपरिक्षिप्तान् मनसः प्रीतिवर्द्धनान् । स पश्यन् सुमहातेजा बभूव मुदितस्तथा ॥
परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः । अशोभत वनं तत् तैर्महेन्द्रध्वजसन्निभैः ॥
सिद्धचारणसङ्घैश्च गन्धर्वाप्सरसां गणैः । सेवितं वनमत्यर्थं मत्तवानरकिन्नरैः ॥
सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः । परिक्रामन् वने वृक्षानुपैतीव रिरंसया ॥
एवं गुणैः समायुक्तं ददर्श स वनं नृपः । नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसन्निभम् ॥
प्रेक्षमाणो वनं तत्तु संप्रहृष्टविहङ्गमम् । आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥
नानावृक्षसमाकीर्णं सम्प्रज्वलितपावकम् । तं तदाऽप्रतिमं श्रीमानाश्रमं प्रत्यपूजयत् ॥
यतिभिर्वालिखिल्यैश्च वृतं मुनिगणान्वितम् । अग्न्यागारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम् ॥
महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च । मालिनीमभितो राजन् नदीं पुण्यां सुखोदकाम् ॥
नैकपक्षिगणाकीर्णां तपोधनमनोरमाम् । तत्र व्यालमृगान् सौम्यान् पश्यन् प्रीतिमवाप सः ॥
तच्चाप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत । देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥
नदीं चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः । सर्वप्राणभृतां तत्र जननीमिव धिष्ठिताम् ॥
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिणीम् । सकिन्नरगणावासां वानरर्क्षनिषेविताम् ॥
पुण्यस्वाध्यायसंघुष्टां तापसैरूपशोभिताम् । मत्तवारणशार्दूल-भुजगेन्द्रनिषेविताम् ॥

तस्यास्तीरे भगवतः काश्यपस्य महात्मनः । आश्रमप्रवरं रम्यं महर्षिगणसेवितम् ॥
नदीमाश्रमसम्बद्धां दृष्ट्वाश्रमपदं तथा । चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥
अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया । नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥
मत्तवर्हिणसंघुष्टं प्रविवेश महद्वनम् । तत् स चैत्ररथप्रख्यं समुपेत्य नरर्षभः ॥
अतीव गुणसम्पन्नमनिर्देश्यञ्च वर्चसा । महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् ॥
ध्वजिनीमश्वसम्बाधां पदातिगजसङ्कुलाम् । अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोवनम् । काश्यपं स्थीयतामत्र यावदागमनं मम ॥
तद्वनं नन्दनप्रख्यमासाद्य मनुजेश्वरः । क्षुत्पिपासे जहौ राजा हर्षं चावाप पुष्कलम् ॥
सामात्यो राजलिङ्गानि सोऽपनीय नराधिपः । पुरोहितसहायश्च जगामाश्रममुत्तमम् ॥
दिदृक्षुस्तत्र तमृषिं तपोराशिमथाव्ययम् । ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य ह ॥
षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतम् । ऋचो बह्वृचमुख्यैश्च प्रेर्य्यमाणाः पदक्रमैः ॥
शुश्राव मनुजव्याघ्रो विततेष्विह कर्म्मसु । यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितम् ॥
मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः । भारुण्डसामगीताभिरथर्वशिरसोद्गतैः ॥
यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः । अथर्ववेदप्रवराः पूगयज्ञीयसामगाः ॥
संहितामीरयन्ति स्म पदक्रमयुतान्तु ते । शब्दसंस्कारसंयुक्तैर्ब्रुवद्भिश्चापरैर्द्विजैः ॥
नादितः स बभौ श्रीमान् ब्रह्मलोक इवापरः । यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः ॥
न्यायतत्त्वार्थविज्ञान-सम्पन्नैर्वेदपारगैः । नानावाक्यसमाहारसमवायविशारदैः ॥
विशेषकार्य्यविद्भिश्च मोक्षधर्म्मपरायणैः । स्थापनाक्षेपसिद्धान्त-परमार्थज्ञतां गतैः ॥
शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः । द्रव्यकर्म्मगुणज्ञैश्च कार्य्यकारणवेदिभिः ॥

पक्षिकीशरुतज्ञैश्च व्यासग्रन्थसमाश्रितैः ॥

नानाशास्त्रेषु मुख्येषु शुश्राव स्वनमीरितम् । लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥
तत्र तत्र च विप्रेन्द्रान् नियतान् संशितव्रतान् । जपहोमपरान् सिद्धान् ददर्श परवीरहा ॥
आसनानि विचित्राणि रुचिराणि महीपतिः । प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागतः ॥
देवतानामृषीणाञ्च प्रेक्ष्य पूजां कृतां द्विजैः । ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् । नाऽतृप्यत प्रेक्षमाणो वै तपोबलगुणैर्युतम् ॥

स काश्यपस्यायतनं महाव्रतैर्वृतं समन्तादृषिभिस्तपोधनैः ।
विवेश सामात्यपुरोहितोऽरिहा विविक्तमत्यर्थमनोहरं शुभम् ॥

वैशम्पायन उवाच ।

ततोगच्छन् महाबाहुरेकोऽमात्यान् विसृज्य तान् ।
नाऽपश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥

सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तमाश्रमम् । उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव ॥

श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी ।
निश्चक्रामाश्रमात् तस्मात् तापसीवेशधारिणी ॥

सा तं दृष्ट्वैव राजानं दुष्मन्तमसितेक्षणा । "स्वागतं ते" इति क्षिप्रमुवाच प्रतिपूज्य च॥
आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि । पप्रच्छानामयं राजन्! कुशलञ्च नराधिपम् ॥
यथावदर्चयित्वा सा पृष्ट्वा चानामयं तदा। उवाच स्मयमानेव किं कार्य्यं क्रियतामिति ॥
तामब्रवीत् ततो राजा कन्यां मधुरभाषिणीम् । दृष्ट्वा चैवानवद्याङ्गीं यथावत् प्रतिपूजितः॥
आगतोऽहं महाभागमृषिं कण्वमुपासितुम् । क गतो भगवान् भद्रे! तन्ममाचक्ष्व शोभने ॥

शकुन्तलोवाच ।

गतः पिता मे भगवान् फलान्याहर्त्तुमाश्रमात् । मुहूर्त्तं सम्प्रतीक्षस्व द्रष्टास्येनमुपागतम् ॥

वैशम्पायन उवाच ।

अपश्यमानस्तमृषिं तया चोक्तस्तथा च सः । तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥
विभ्राजमानां वपुषा तपसा च दमेन च । रूपयौवनसम्पन्नामित्युवाच महीपतिः ॥
काऽसि कस्यासि सुश्रोणि! किमर्थं चागता वनम् । एवं रूपगुणोपेता कुतस्त्वमसि शोभने ॥
दर्शनादेव हि शुभे! त्वया मेऽपहृतं मनः । इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने ॥
एवमुक्ता तु सा कन्या तेन राज्ञा तदाश्रमे । उवाच हसती वाक्यमिदं सुमधुराक्षरम् ॥
कण्वस्याहं भगवतो दुष्मन्त! दुहिता मता । तपस्विनो धृतिमतो धर्मज्ञस्य मनीषिणः ॥

दुष्मन्त उवाच ।

ऊर्द्ध्वरेता महाभागो भगवान् लोकपूजितः । चलेद्धि वृत्ताद्धर्मोऽपि न चलेत् संशितव्रतः ॥
कथं त्वं तस्य दुहिता सम्भूता वरवर्णिनि । संशयो मे महानत्र तं मे छेत्तुमिहार्हसि ॥

शकुन्तलोवाच ।

यथाऽयमागमो मह्यं यथा चेदमभूत् पुरा । शृणु राजन्! यथातत्त्वं यथाऽस्मि दुहिता मुनेः ॥
ऋषिः कश्चिदिहागम्य मम जन्माभ्यनोदयत् । तस्मै प्रोवाच भगवान् यथा तच्छृणु पार्थिव!

कण्व उवाच ।

तप्यमानः किल पुरा विश्वामित्रो महत् तपः । सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥
तपसा दीप्तवीर्य्योऽयं स्थानान्मां च्यावयेदिति । भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत् ॥

२

गुणैरप्सरसां दिव्यैर्मेनके ! त्वं विशिष्यसे ।
श्रेयो मे कुरु कल्याणि ! यत् त्वां वक्ष्यामि तच्छृणु ॥
असावादित्यसङ्काशो विश्वामित्रो महातपाः । तप्यमानस्तपो घोरं मम कम्पयते मनः ॥
मेनके ! तव भारोयं विश्वामित्रः सुमध्यमे ! । संशितात्मा सुदुर्द्धर्षं उग्रे तपसि वर्त्तते ॥
स मां न च्यावयेत् स्थानात् तं वै गत्वा प्रलोभय । चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम्
रूप-यौवन-माधुर्य्य-चेष्टितस्मित-भाषितैः । लोभयित्वा वरारोहे ! तपसस्तं निवर्त्तये ॥

मेनकोवाच ।

महातेजाः स भगवांस्तथैव च महातपाः । कोपनश्च तथा ह्येनं जानाति भगवानपि ॥
तेजसस्तपसश्चैव कोपस्य च महात्मनः । त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥
महाभागं विशिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत् । क्षत्रजातश्च यः पूर्वमभवद् ब्राह्मणो वलात् ॥
शौचार्थं यो नदीञ्चक्रे दुर्गमां वहुभिर्जलैः । यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः ॥
वभार यत्रास्य पुरा काले दुर्गे महात्मनः । दारान् मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ॥
अतीतकाले दुर्भिक्षे यत्रैत्य पुनराश्रमम् । मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः ॥
मतङ्गं याजयाञ्चक्रे यत्र प्रीतमनाः स्वयम् । त्वं च सोमं भयाद् यस्य गतः पातुं सुरेश्वर !॥
चकारान्यञ्च लोकं वै क्रुद्धो नक्षत्रसम्पदा । प्रतिश्रवणपूर्वाणि नक्षत्राणि चकार यः ॥
गुरुशापहतस्याऽपि त्रिशङ्कोः शरणं ददौ ॥
एतानि यस्य कर्माणि तस्याऽहं भृशमुद्विजे । यथाऽसौ न दहेत् क्रुद्धस्तथाज्ञापय मां प्रभो! ॥
तेजसा निर्द्दहेल्लोकान् कम्पयेद्धरणीं पदा । संक्षिपेच्च महामेरुं तूर्णमावर्त्तयेद्दिशः ॥
तादृशं तपसा युक्तं प्रदीप्तमिव पावकम् । कथमस्मद्विधा नारी जितेन्द्रियमभिस्पृशेत् ॥
हुताशनमुखं दीप्तं सूर्य्यचन्द्राक्षितारकम् । कालजिह्वं सुरश्रेष्ठ ! कथमस्मद्विधा स्पृशेत् ॥
यमश्च सोमश्च महर्षयश्च साध्या विश्वे वालिखिल्याश्च सर्वे ।
एतेऽपि यस्योद्विजन्ते प्रभावात् तस्मात् कस्मान्मादृशी नोद्विजेत ॥
त्वयैवमुक्ता च कथं समीपमृषेर्न्नगच्छेयमहं सुरेन्द्र ! ।
रक्षान्तु मे चिन्तय देवराज ! यथा त्वदर्थं रक्षिताहं चरेयम् ॥
कामन्तु मे मारुतस्तत्र वासः प्रक्रीडिताया विवृणोतु देव ! ।
भवेच्च मे मन्मथस्तत्र कार्य्ये सहायभूतश्च तव प्रसादात् ॥
वनाच्च वायुः सुरभिः प्रवायात् तस्मिन् काले तमृषिं लोभयन्त्याः ।
तथेत्युक्त्वा विहिते चैव तस्मिंस्ततो ययौ साश्रमं कौशिकस्य ॥

इति ७१ अध्यायः ।

कण्व उवाच ।

एवमुक्तस्तया शक्रः सन्दिदेश सदागतिम् । प्रातिष्ठत तदा काले मेनका वायुना सह ॥
अथाऽपश्यद्वरारोहा तपसा दग्धकिल्बिषम् । विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे ॥
अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ । अपोवाह च वासोऽस्या मारुतः शशिसन्निभम्॥
साऽगच्छत् त्वरिता भूमिं वासस्तदभिलिप्सती । स्मयमानेव सव्रीडं मारुतं वरवर्णिनी ।
पश्यतस्तस्य तत्रर्षेरप्यग्निसमतेजसः ॥ विश्वामित्रस्ततस्तान्तु विषमस्थामनिन्दिताम् ।
गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः । अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ॥
तस्या रूपगुणं दृष्ट्वा स तु विप्रर्षभस्तदा । चकार भावसंसर्गं तया कामवशं गतः ।
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता ॥ तौ तत्र सुचिरं कालमुभौ व्याहरतां तदा ।
रममाणौ यथाकामं यथैकदिवसं तथा ॥ स मुनिर्जनयामास मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥ जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्य्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥ तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात् पर्य्यवारयन् ॥ नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ।
पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥ उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ।
निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् ॥ आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ॥
शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते । क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥
निर्जने तु वने यस्मात् शकुन्तैः परिवारिता । शकुन्तलेति नामास्याः कृतञ्चापि ततो मया॥
एवं दुहितरं विद्धि मम विप्र ! शकुन्तलाम् ॥ शकुन्तला च पितरं मन्यते मामनिन्दिता ।

शकुन्तलोवाच ।

एतदाचष्ट पृष्टः सन् मम जन्म महर्षये । सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ! ॥
कण्वं हि पितरं मन्ये पितरं स्वमजानती । इति ते कथितं राजन् ! यथावृत्तं श्रुतं मया ॥

इति ७२ अध्यायः ।

दुष्मन्त उवाच ।

सुव्यक्तं राजपुत्री त्वं यथा कल्याणि ! भाषसे । भार्य्या मे भव सुश्रोणि ! ब्रूहि किं करवाणि ते ॥
सुवर्णमालां वासांसि कुण्डले परिहाटके । नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥
आहरामि तवाद्याहं निष्कादिव्यजिनानि च । सर्वं राज्यं तवाद्यास्तु भार्य्या मे भव शोभने ! ॥
गान्धर्वेण च मां भीरु ! विवाहेनैहि सुन्दरि ! । विवाहानां हि रम्भोरु ! गान्धर्वः श्रेष्ठ उच्यते॥

शकुन्तलोवाच ।

फलाहारो गतो राजन् ! पिता मे इत आश्रमात् । मुहूर्त्तं त्वं प्रतीक्षस्व स मां तुभ्यं प्रदास्यति॥

दुष्मन्त उवाच ।

इच्छामि त्वां वरारोहे ! भजमानामनिन्दिते ! । त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम॥
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः । आत्मनैवात्मनो दानं कर्त्तुमर्हसि धर्म्मतः ॥
अष्टावेव समासेन विवाहाः धर्म्मतः स्मृताः । ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ॥ तेषां धर्म्यान् यथा पूर्वं मनुः सायम्भुवोऽब्रवीत्
प्रशस्तांश्चतुरः पूर्वान् ब्राह्मणस्योपधार ॥ षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते ! ।
राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रे चासुरः स्मृतः॥ पञ्चानान्तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥ अनेन विधिना कार्य्यो धर्म्मस्यैषा गतिः स्मृता ॥
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः । पृथग्वा यदि वा मिश्रौ कर्त्तव्यौ नात्र संशयः
सा त्वं मम सकामस्य सकामा वरवर्णिनि ! । गान्धर्वेण विवाहेन भार्य्या भवितुमर्हसि ॥

शकुन्तलोवाच ।

यदि धर्म्मपथस्त्वेष यदि चात्मा प्रभुर्मम । प्रदाने पौरवश्रेष्ठ ! शृणु मे समयं प्रभो ! ॥
सत्यं मे प्रतिजानीहि यथा वक्ष्याम्यहं रहः । मयि जायेत यः पुत्रः स भवेत् त्वदनन्तरम् ।
युवराजो महाराज ! सत्यमेतद्ब्रवीमि ते ॥ यद्येतदेवं दुष्मन्त ! अस्तु मे सङ्गमस्त्वया॥

वैशम्पायन उवाच ।

एवमस्त्विति तां राजा प्रत्युवाचाऽविचारयन्। अपि च त्वां हि नेष्याभि नगरं स्वं शुचिस्मिते
यथा त्वमर्हा सुश्रोणि! सत्यमेतद्ब्रवीमि ते। एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम्॥
जग्राह विधिवत् पाणावुवास च तया सह ॥ विश्वास्य चैनां स प्रायादब्रवीच्च पुनःपुनः ।
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम्। तया त्वां नायथिष्यामि निवासं स्वं शुचिस्मिते !॥
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ! । मनसा चिन्तयन् प्रायात् काश्यपं प्रति पार्थिवः ॥
भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति। एवं सञ्चिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥
मुहूर्त्तयाते तस्मिंस्तु कण्वोऽप्याश्रममागमत्। शकुन्तला च पितरं ह्रिया नोपजगाम तम्॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः । उवाच भगवान् प्रीतः पश्यन् दिव्येन चक्षुषा॥
त्वयाऽद्य भद्रे! रहसि मामनादृत्य यः कृतः । पुंसा सह समायोगो न स धर्मोपघातकः ॥
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते । सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः॥
धर्म्मात्मा च महात्मा च दुष्मन्तः पुरुषेश्वरः । अभ्यगच्छः पतिं यं त्वं भजमानं शकुन्तले !॥
महात्मा जनिता लोके पुत्रस्तव महाबलः । य इमां सागरापाङ्गीं कृत्स्नां भोक्ष्यति मेदिनीम् ॥
परश्चाभिप्रयातस्य चक्रं तस्य महात्मनः । भविष्यत्यप्रतिहतं सततं चक्रवर्त्तिनः ॥
ततः प्रक्षाल्य पादौ सा विश्रान्तं मुनिमब्रवीत् । विनिधाय ततो भारं सन्निधाय फलानि च॥

शकुन्तलोवाच ।

मया पतिर्वृतो योऽसौ दुष्मन्तः पुरुषोत्तमः । तस्मै ससचिवाय त्वं प्रसादं कर्त्तुमर्हसि ॥

कण्व उवाच ।

प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि ! । गृहाण च वरं मत्तस्त्वं शुभे ! यदभीप्सितम् ॥

वैशम्पायन उवाच ।

ततो धर्म्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा । शकुन्तला पौरवाणां दुष्मन्तहितकाम्यया ॥

इति ७३ अध्यायः ।

वैशम्पायन उवाच ।

प्रतिज्ञाय तु दुष्मन्ते प्रतियाते शकुन्तला । असूयत च वामोरूः कुमारममितौजसम् ॥
त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम् । रूपौदार्य्यगुणोपेतं दौष्मन्तिं जनमेजय ! ॥
जातकर्म्मादिसंस्कारं कण्वः पुण्यकृतां वरः । विधिवत् कारयामास वर्द्धमानस्य धीमतः ॥
दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो महान् । चक्राङ्कितकरः श्रीमान् महामूर्द्धा महाबलः ।
कुमारो देवगर्भाभः स तत्राशु व्यवर्धत ॥ षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ।
सिंहान् व्याघ्रान् वराहांश्च महिषांश्च गजांस्तथा । बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ॥
आरोहन् दमयंश्चैव क्रीडंश्च परिधावति । ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ॥
अस्त्वयं "सर्वदमनः" सर्वान् हि दमयत्यसौ ॥ सर्वदमनो नाम कुमारः समपद्यत ।
विक्रमेणौजसा चैव बलेन च समन्वितः ॥ तं कुमारमृषिर्दृष्ट्वा कर्म्म चास्यातिमानुषम् ।
समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् । तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह ।
शकुन्तलामिमां शीघ्रं सहपुत्रामितो गृहात् । भर्त्तुः प्रापयतागारं सर्वलक्षणपूजितम् ॥
नारीणां चिरवासो हि बान्धवेषु न रोचते । कीर्त्तिचारित्रधर्म्मघ्नस्तस्मान्नयत मा चिरम् ॥
तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः । शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् ॥
गृहीत्वाऽमरगर्भाभं पुत्रं कमललोचनम् । आजगाम ततः सुभ्रूर्दुष्मन्तं विदिताद्वनात् ॥
अभिसृत्य च राजानं विदिता च प्रवेशिता । सह तेनैव पुत्रेण बालार्कसमतेजसा ॥
निवेदयित्वा ते सर्वे स्वाश्रमं पुनरागताः । पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला ॥

अयं पुत्रस्त्वया राजन् ! यौवराज्येऽभिषिच्य ताम् ।
त्वया ह्ययं सुतो राजन् ! मय्युत्पन्नः सुरोपमः ॥

यथासमयमेतस्मिन् वर्त्तस्व पुरुषोत्तम ! । यथा मत्सङ्गमे पूर्वं कृतो यः समयस्त्वया ।
तं स्मरस्व महाभाग ! कण्वाश्रमपदं प्रति ॥ सोऽथ श्रुत्वैव तद्वाक्यं तस्य राजा स्मरन्नपि ।
अब्रवी'न्न स्मरामी'ति कस्य त्वं दुष्टतापसि! ॥ धर्म्मकामार्थसम्बन्धं न स्मरामि त्वयासह ।

गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥ सैवमुक्ता वरारोहा व्रीडितेव तपस्विनी । निःसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला ॥ संरम्भामर्षताम्राक्षी स्फुरमाणौष्ठसम्पुटा । कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजानमैक्षत ॥ आकारं गूहमाना च मन्युना च समीरिता । तपसा सम्भृतं तेजो धारयामास वै तदा ॥ सा मुहूर्त्तमिव ध्यात्वा दुःखामर्षसमन्विता । भर्त्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत् ॥ जानन्नपि महाराज ! कस्मादेवं प्रभाषसे । न जानामीति निःशङ्कं यथाऽन्यः प्राकृतो जनः ॥ अत्र ते हृदयं वेद सत्यस्यैवानृतस्य वा। कल्याणं वद साक्ष्येण माऽऽत्मानमवमन्यथा ॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।

किं तेन न कृतं पापं चौरेणात्मापहारिणा ? ॥

एकोऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्म्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि ॥

मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति । विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः ॥

आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥

यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् । हृदिस्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥ न तु तुष्यति तस्यैव पुरुषस्य दुरात्मनः । तं यमः पापकर्माणं वियातयति दुष्कृतम् ॥ योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते । न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम्॥ स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम्। आर्च्याहां नार्चयसि मां स्वयं भार्य्यामुपस्थिताम्॥ किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि । न खल्वहमिदं शून्ये रौमि किं न शृणोषि मे ॥ यदि मे याचमानाया वचनं न करिष्यसि । दुष्मन्त ! शतधा मूर्द्धा ततस्तेऽद्य स्फुटिष्यति॥ भार्य्यां पतिः सम्प्रविश्य स यस्माज्जायते पुनः।जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः यदागमवतः पुंसस्तदपत्यं प्रजायते । तत् तारयति सन्तत्या पूर्वप्रेतान् पितामहान् ॥ पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते । अथ पौत्रस्य पुत्रेण मोदन्ते प्रपितामहाः ॥

सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती ।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥

अर्द्धं भार्य्या मनुष्यस्य भार्य्या श्रेष्ठतमः सखा। भार्य्या मूलं त्रिवर्गस्य भार्य्या मूलं तरिष्यतः॥

भार्य्यावन्तः क्रियावन्तः सभार्य्या गृहमेधिनः ।
भार्य्यावन्तः प्रमोदन्ते भार्य्यावन्तः श्रियान्विताः ॥

सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः। पितरो धर्म्मकार्य्येषु भवन्त्यार्त्तस्य मातरः ॥
कान्तारेष्वपि विश्रामो जनस्याध्वनि कस्य वै। यः सादरः स विश्वास्यस्तस्माद्दाराः परा गतिः
संस्मरन्तमति प्रेतं विषमेष्वेकपातिनम्। भार्य्यैवान्वेति भर्त्तारं सततं मा पतिव्रता ॥
प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रतीक्षते। पूर्वं मृतञ्च भर्त्तारं पश्चात् साध्व्यनुगच्छति ॥
एतस्मात् कारणाद्राजन् ! पाणिग्रहणमिष्यते। यदाप्नोति पतिर्भार्य्यामिह लोके परत्र च ॥
आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः। तस्माद् भार्य्यां नरः पश्येन्मातृवत् पुत्रमातरम्॥
भार्य्यायां जनितं पुत्रमादर्शेष्विव चाननम्। ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः। ह्लादन्ते स्वेषु दारेषु धर्मार्त्ताः सलिलेष्विव ॥
सुसंरब्धोऽपि रामाणां न कुर्य्यादप्रियं नरः। रतिं प्रीतिञ्च धर्मञ्च तास्वायत्तमवेक्ष्य हि ॥
आत्मनो जन्मनः क्षेत्रं पुण्यं रामा सनातनम्। ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः॥
परिपत्य यदा सूनुर्द्धरणीरेणुगुण्ठितः। पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः ॥
स त्वं स्वयमभिप्राप्तं साभिलाषमिमं सुतम्। प्रेक्षमाणं कटाक्षेण किमर्थमवमन्यसे ॥

अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः।
न भरेथाः कथं नु त्वं धर्म्मज्ञः सन् स्वमात्मजम् ॥

न वाससां न रामाणां नापांस्पर्शस्तथाविधः।शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः॥
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम्। गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥
स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः। पुत्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते ॥
त्रिषु वर्षेषु पूर्णेषु प्रजाताहमरिन्दमम्। इमं कुमारं राजेन्द्र ! तव शोकविनाशनम् ॥
आहर्त्ता वाजिमेधस्य शतसंख्यस्य पौरव !। इति वागन्तरीक्षे मां सूतके ह्यवदत् पुरा ॥
ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः। मूर्द्ध्नि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ॥
वेदेष्वपि वदन्तीमं मन्त्रजातं द्विजातयः। जातकर्म्मणि पुत्राणां तवापि विदितं यथा ॥
अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि स जीव शरदां शतम् ॥
जीवितं त्वदधीनं मे सन्तानमपि चाक्षयम्। तस्मात् त्वं जीव मे पुत्र! सुसुखी शरदां शतम्॥
त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात् पुरुषोऽपरः। सरसीवामलेऽस्मानं द्वितीयं पश्य वै सुतम् ॥
यथा ह्याहवनीयोऽग्निर्गार्हपत्यात् प्रणीयते। तथा त्वत्तः प्रसूतोऽयं त्वमेकः सन् द्विधाकृतः ॥
मृगावकृष्टेन पुरा मृगयां परिधावता। अहमासादिता राजन् ! कुमारी पितुराश्रमे ॥
उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका। विश्वाची च घृताची च षडेवाप्सरसां वराः ॥
तासां मे मेनका नाम ब्रह्मयोनिर्वराप्सराः। दिवः सम्प्राप्य जगतीं विश्वामित्रादजीजनत् ॥

सा मां हिमवतः प्रस्थे सुषुवे मेनकाप्सराः । अवकीर्य्य च मां याता परात्मजमिवासती ॥
किन्नु कर्म्माशुभं पूर्वं कृतवत्यस्मि जन्मनि । यदहं बान्धवैस्त्यक्ता बाल्ये सम्प्रति च त्वया॥
कामं त्वया परित्यक्ता गमिष्यामि स्वमाश्रमम् । इमं तु बालं सन्त्यक्तुं नार्हस्यात्मजमात्मना॥

दुष्मन्त उवाच ।

न पुत्रमभिजानामि त्वयि जातं शकुन्तले ! । असत्यवचना नार्य्यः कस्ते श्रद्धास्यते वचः ? ॥
मेनका निरनुक्रोशा बन्धकी जननी तव । यया हि हिमवत्पृष्ठे निर्माल्यमिव चोज्झिता ॥
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव । विश्वामित्रो ब्राह्मणत्वे लुब्धः कामवशं गतः॥
मेनकाऽप्सरसां श्रेष्ठा महर्षीणां पिता च ते । तयोरपत्यं कस्मात् त्वं पुंश्चलीव प्रभाषसे ॥
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ? । विशेषतो मत्सकाशे दुष्टतापसि ! गम्यताम् ॥
क्व महर्षिः स चैवाग्र्यः क्वाऽप्सराः सा च मेनका । क्व च त्वमेवं कृपणा तापसीवेशधारिणी ॥
अतिकायश्च ते पुत्रो बालोऽतिबलवानयम् । कथमल्पेन कालेन शालस्तम्भ इवोद्गतः ॥
सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे । यदृच्छया कामरागाज्जाता मेनकया ह्यसि ॥
सर्वमेतत् परोक्षं मे यत् त्वं वदसि तापसि ! । नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया॥

शकुन्तलोवाच ।

राजन् ! सर्षपमात्राणि परच्छिद्राणि पश्यसि । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ?॥
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् । ममैवोद्रिच्यते जन्म दुष्मन्त ! तव जन्मतः॥
क्षितावटसि राजेन्द्र ! अन्तरीक्षे चराम्यहम् । आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥
महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च । भवनान्यनुसंयामि प्रभावं पश्य मे नृप ! ॥
सत्यश्चापि प्रवादोऽयं यं प्रवक्ष्यामि तेऽनघ ! । निदर्शनार्थं न द्वेषात् श्रुत्वा त्वं क्षन्तुमर्हसि॥
विरूपो यावदादर्शे नात्मनः पश्यते मुखम् । मन्यते तावदात्मानमन्येभ्यो रूपवत्तमम् ॥
यदा तु मुखमादर्शे विकृतं सोऽभिवीक्षते । तदेतरं विजानाति सोत्मानं नेतरं जनम् ॥
अतीव रूपसम्पन्नो न किञ्चिदवमन्यते । अतीव जल्पन् दुर्वाचो भवतीह विहेठकः ॥
मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः॥
अन्यान् परिवदन् साधुर्यथा हि परितप्यते । तथा परिवदन्नन्यान् हृष्टो भवति दुर्ज्जनः ॥
अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतम् । एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः । यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥
अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते । यत्र दुर्ज्जन इत्याह दुर्ज्जनः सज्जनं स्वयम् ॥

सत्यधर्म्मच्च्युतात् पुंसः क्रुद्धादाशीविषादिव । अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः?॥
स्वयमुत्पाद्य वै पुत्त्रं सदृशं यो न मन्यते । तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥
कुलवंशप्रतिष्ठां हि पितरः पुत्त्रमब्रुवन् । उत्तमं सर्वधर्म्माणां तस्मात् पुत्त्रं न सन्त्यजेत् ॥
स्वपत्नीप्रभवान् पञ्च लब्धान् क्रीतान् विवर्द्धितान् । कृतानन्यासु चोत्पन्नान् पुत्त्रान् वै मनुरब्रवीत्
धर्म्मकीर्त्त्यावहा नृणां मनः सम्प्रीतिवर्द्धनाः । त्रायन्ते नरकाज्जाताः पुत्त्रा धर्म्मप्लवाः पितॄन् ॥
स त्वं नृपतिशार्दूल ! पुत्त्रं न त्यक्तुमर्हसि । आत्मानं सत्यधर्म्मौ च पालयन् पृथिवीपते ! ॥
नरेन्द्रसिंह ! कपटं न वोढुं त्वमिहार्हसि ॥ वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्त्रः सत्यं पुत्त्रशताद्वरम् ॥ अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते । सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ॥
सत्यञ्च वचनं राजन् ! समं वा स्यान्न वा समम् । नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम्
न हि तीव्रतरं किञ्चिदनृतादिह विद्यते । राजन् ! सत्यं परं ब्रह्म सत्यञ्च समयः परः ॥
मा त्याक्षीः समयं राजन् ! सत्यं सङ्गतमस्तु ते । अनृते चेत् प्रसङ्गस्ते श्रद्दधासि न चेत् स्वयम्
आत्मना हन्त गच्छामि त्वादृशे नास्ति सङ्गतम् ॥
त्वामृतेऽपि हि दुष्मन्त ! शैलराजावतंसिकाम् । चतुरन्तामिमामुर्वीं पुत्त्रो मे पालयिष्यति ॥

वैशम्पायन उवाच ।

एतावदुक्त्वा राजानं प्रातिष्ठत शकुन्तला । अथान्तरीक्षाद्दुष्मन्तं वागुवाचाऽशरीरिणी ॥
ऋत्विक्पुरोहिताचार्य्यैर्मन्त्रिभिश्च वृतं तदा । "भस्त्रा माता पितुः पुत्त्रो येन जातः स एव सः॥
भरस्व पुत्त्रं दुष्मन्त ! माऽवमंस्थाः शकुन्तलाम् । रेतोधाः पुत्त्र उन्नयति नरदेव ! यमक्षयात् ॥
त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला । जाया जनयते पुत्त्रमात्मनोऽङ्गं द्विधाकृतम् ॥
तस्माद्भरस्व दुष्मन्त ! पुत्त्रं शाकुन्तलं नृप । अभूतिरेषा यत्त्यक्त्वा जीवेज्जीवन्तमात्मजम् ॥
शाकुन्तलं महात्मानं दौष्मन्तिं भर पौरवम् । भर्त्तव्योऽयं त्वया यस्मादस्माकं वचनादपि ॥
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः" । तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसाम् ॥
पुरोहितममात्यांश्च सम्प्रहृष्टोऽब्रवीदिदम् । शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम् ॥
अहञ्चाप्येवमेवैनं जानामि स्वयमात्मजम् । यद्यहं वचनादेव गृह्णीयामेवमात्मजम् ॥
भवेद्धि शङ्क्यो लोकस्य नैव शुद्धो भवेदयम् ॥

वैशम्पायन उवाच ।

तं विशोध्य तदा राजा देवदूतेन भारत ! हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥
ततस्तस्य तदा राजा पितृकार्य्याणि सर्वशः । कारयामास मुदितः प्रीतिमानात्मजस्य ह ॥

मूर्द्धि चैनमुपाघ्राय सस्नेहं परिषस्वजे । सभाज्यमानो विप्रैश्च स्तूयमानश्च वन्दिभिः ॥
स मुदं परमां लेभे पुत्रसंस्पर्शजां नृपः । ताञ्चैव भार्य्यां दुष्मन्तः पूजयामास धर्म्मतः ॥
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः । कृतो लोकपरोक्षोऽयं सम्बन्धो वै त्वया सह ॥
तस्मादेतन्मया देवि! तच्छुद्ध्यर्थं विचारितम् । मन्यते चैव लोकस्ते स्त्रीभावान्मयि सङ्गतम्
पुत्रश्चायं वृतो राज्ये मया तस्माद्विचारितम् । यच्च कोपितयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ॥
प्रणयिन्या विशालाक्षि! तत् क्षान्तं ते मया शुभे । तामेवमुक्त्वा राजर्षिर्दुष्मन्तो महिषीं प्रियाम्॥
वासोभिरन्नपानैश्च पूजयामास भारत! । दुष्मन्तस्तु ततो राजा पुत्रं शाकुन्तलं तदा ॥
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् । तस्य तत् प्रथितं चक्रं प्रावर्त्तत महात्मनः ॥
भास्वरं दिव्यमजितं लोकसन्नादनं महत् । स विजित्य महीपालांश्चकार वशवर्त्तिनः ॥
चचार च सतां धर्म्मं प्राप चानुत्तमं यशः । स राजा चक्रवर्त्त्यासीत् सार्वभौमः प्रतापवान् ॥
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः । याजयामास तं कण्वो विधिवद्भूरिदक्षिणम् ॥
श्रीमान् गोविततं नाम वाजिमेधमवाप सः । यस्मिन् सहस्रं पद्मानां कण्वाय भरतो ददौ ॥
भरताद्भारती कीर्त्तिर्येनेदं भारतं कुलम् । अपरे ये च पूर्वे वै भरता इति विश्रुताः ॥
भरतस्यान्ववाये हि देवकल्पा महौजसः । बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ॥
येषामपरिमेयाणि नामधेयानि सर्वशः । तेषान्तु ते यथा मुख्यं कीर्त्तयिष्यामि भारत! ॥
महाभागान् देवकल्पान् सत्यार्जवपरायणान् ॥

(इति ७४ अध्यायः)

इति श्रीमहाभारते आदिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्यानम् ।



पद्मपुराणोक्तं—

# शकुन्तलोपाख्यानम् ।

## ( स्वर्गखण्डम् )

शेष उवाच ।

दुष्मन्तो नाम राजर्षिश्चन्द्रवंशविभूषणः । पौरवः सुमहातेजा वेदवेदाङ्गपारगः ॥
धनुर्विद्यासु निपुणः सर्वराजगुणान्वितः । कन्दर्प इव सौन्दर्य्ये धैर्य्ये च तुहिनाचलः ॥
समुद्र इव गम्भीरः कुवेर इव ऋद्धिमान् । प्रतापे वासवसमस्तेजस्वी भानुमानिव ॥
सत्सु स्निग्धो यथा चन्द्रो धर्म्मतन्त्रे यथा मनुः । स प्रजाः पालयामास नृपः पुत्रानिवौरसान् ॥
कदाचिन्मृगयां राजा स जगाम बलैर्वृतः । रम्यं स्यन्दनमारुह्य नानामणिगणाञ्चितम् ॥
अथारण्ये ददर्शासौ मृगमत्यन्तमूर्ज्जितम् । तमन्वधावद् राजर्षिर्मृगमात्तशरासनः ॥
मृगोऽपि वलवांस्तस्मिन्नुत्प्लवेन महायशाः । धावत्येव ततो राजा वद्धामर्षोऽनुधावति ॥
ततः कण्वाश्रमाभ्यासे मृगं प्रति महावलः । सन्दधे शरमत्युग्रं शब्दभेदिनमाशु वै ॥
तं तथा संहितसरं कण्वशिष्याः सुदूरतः । अब्रुवन्नाश्रममृगो न हन्तव्यो महीपते ! ॥
तदाश्रममृगेत्येवं कर्णार्द्धमागते शरे । संजहार महावाणं पौरवः पौरुषान्वितः ॥
प्रत्याख्यातसमुद्योगस्तृषार्त्तः स महीपतिः । तोयमन्वेषयन् कन्या ददर्शाप्सरसां समाः ॥
स्वानुरूपघटैः कक्ष-विन्यस्तैः सरसः पयः । आहृत्य सिञ्चतीर्बाला वन्यानाश्रमपादपान् ॥
तासां मध्येऽतिरम्याङ्गी कन्या नाम्ना शकुन्तला । राजानं प्रेक्ष्य सुस्निग्धमुवाच वचनं द्विज! ॥
त्वमद्यातिथिरायातः सत्कृतो यास्यसि ध्रुवम् । इदमासनमेतत् ते पाद्यमर्घ्यञ्च गृह्यताम् ॥
तद्वागमृतसन्तुष्टो गृहीत्वातिथिसत्क्रियाम् । मदनाशुगसम्पात-किञ्चित्स्पृष्टमनोरथः ॥
उवाच राजा दुष्मन्तः कासि कस्यासि भाविनि! ।
पश्यामित्वां वारारोहे! देवीमिव दिवश्च्युताम् । राजन्योऽहं पुरुकुले दुष्मन्तो नाम भूपतिः॥
तच्छ्रुत्वा सा सखीं प्राह कथय त्वं ममोद्भवम् ॥

सख्युवाच ।

राजन्यो गाधितनयो विश्वामित्रो महामनाः । वशिष्ठेन जितो युद्धे ब्राह्मणेन बलीयसा ॥
गर्हयन् क्षत्रियबलं ब्रह्मण्यं बहु मानयन् । ब्रह्मण्यार्थी तपस्तेपे बहुवर्षसहस्रकम् ॥
तद्दृष्ट्वा भयमापन्नः शक्रः संमन्त्रय दैवतैः । मेनकां प्रेषयामास तपोविघ्नाय पार्थिव ! ॥

सागत्य पुरतस्तस्य स्वर्गाभरणभूषिता । प्रलोभयामास मुनिं विश्वामित्रं सविभ्रमैः ॥
जितेन्द्रियोऽपि कामेन तदपाङ्गधनुश्च्युतैः । कटाक्षवाणै राजेन्द्र ! विव्यधे गाधिनन्दनः ॥
धैर्य्यच्युतोऽथ वाहुभ्यामाश्लिषन् मेनकां मुहुः । रेमे च मदनाविष्टः क्षणात् संज्ञामवाप सः ॥
व्रीड़ितस्तां विसृज्याथ वनेऽस्मिन् प्रययौ द्रुतम् । मेनकापि च तं गर्भं विमुच्य गहने वने ॥
शक्रलोकं समापेदे न प्रैक्षत पुनर्नृप । शकुन्तैरथ गर्भोऽसौ ररक्षे पृथिवीपते ! ॥
अतः शकुन्तला नाम नृपेयं वरवर्णिनी । कण्वस्तु सुमहातेजाः कन्यां वीक्ष्य वने स्थिताम् ॥
अनुकम्प्य स्वसुतात्वे कल्पयामास सुन्दरीम् । मुनिना संभृता कन्या तं तातं मन्यते सदा ॥
सुतां कण्वस्य विद्धीमां मुनिवर्य्यस्य भूपते ! ॥

दुष्मन्त उवाच ।

सुव्यक्तं राजपुत्रीयं यथा कल्याणि ! भाषसे । अन्यथा पौरवाणां हि मनो नैवानुरज्यति ॥
भार्य्या भवतु सुश्रोणी ममेयं मृगलोचना । सुवर्णमालां वासांसि कुण्डले परिहाटके ॥
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने । आहरामि महाभागे ! निष्कादीन्यतुलानि च ॥
सर्वं राज्यं प्रदास्यामि भार्य्या भवतु ते सखी । गान्धर्वेण च मां वीर-विवाहेण वृणोतु च ॥
विवाहानां हि रम्भोरु ! गान्धर्वः श्रेष्ठ उच्यते ।

शकुन्तलोवाच ।

फलाहारगतो राजन् ! पिता मे इत आश्रमात् । मुहूर्त्तन्तु प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥

दुष्मन्त उवाच ।

इच्छामि त्वां वरारोहे ! भजमानामनिन्दिते ! । त्वदर्थं मां स्थितं विद्धि हृद्गतं हि मनो मम ॥
आत्मनो वन्धुरात्मैव गतिरात्मैव चात्मनः । आत्मनैवात्मनो दानं कर्त्तुमर्हसि सुव्रते ! ॥
अष्टावेव महाभागे ! विवाहा वेदसम्मताः । ब्राह्मो दैवस्तथार्षश्च प्राजापत्यस्तथाऽऽसुरः ॥
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः । मनुः सायम्भुवो धर्म्मान् पूर्वपुर्वान् पुराऽव्रवीत् ॥
प्रशस्तांश्चतुरः पूर्वान् ब्राह्मणस्योपधारय । षडानुपूर्व्या क्षत्राणां विद्धि धर्म्मानिन्दिते ! ॥
राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रस्यासुरः स्मृतः ।
पञ्चानान्तु त्रयो धर्म्मर्या द्वावधर्म्यौ स्मृताविह । पैशाचश्चासुरश्चैव न कर्त्तव्यः कदाचन ॥
गान्धर्व-राक्षसौ क्षत्रधर्म्यौ तौ मा विशङ्किथाः ।
मिश्रौ वापि पृथग्वापि कर्त्तव्यौ द्वौ महीभुजाम् ॥ सा त्वं मम सकामस्य सकामा वरवर्णिनि ! ॥
गान्धर्वेणैव धर्म्मेण भार्य्या भवितुमर्हसि ॥

शकुन्तलोवाच ।

यदि धर्म्मपथस्त्वेष यदि चात्मा प्रभुर्मम । प्रदाने पौरवश्रेष्ठ ! शृणु मे समयं प्रभो ! ॥

प्रतिजानीहि सत्यं मे यथा वक्ष्यामि तेऽनघ ! । मम जायेत यः पुत्रः स भवेत् त्वदनन्तरम् ॥
युवराजो महाराज ! सत्यमेतद् ब्रवीमि ते । अभिज्ञानञ्च राजेन्द्र ! देहि स्वमङ्गुरीयकम् ॥
यद्येतदेवं राजेन्द्र ! अस्तु मे सङ्गमस्त्वया ॥

शेष उवाच ।

एवमस्त्विति तां राजा प्रत्युवाच विचारयन् । अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥
तथा त्वमर्हा सुश्रोणि ! सत्यमेतद् ब्रवीमि ते । एवमुक्त्वा स राजर्षिस्तामनिन्दितविग्रहाम् ॥
जग्राह विधिवत् पाणावुवास च तया सह । विश्वास्य चैनां स प्रायादब्रवीच्च पुनःपुनः ॥
प्रेषयिष्ये च नेतुं त्वां वाहिनीं मन्त्रिभिः सह । विभूत्या परयोपेतां नाययिष्यामि सुव्रते ॥

सूत उवाच ।

इति तस्या प्रतिज्ञाय स नृपो मुनिसत्तम ! । मनसा चिन्तयन् प्रायाद्दत्त्वा चाप्यङ्गुरीयकम् ॥
काश्यपस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ? । एवं विचिन्तयन्नेव प्राविशन्नगरं नृपः ॥

( इति प्रथमोऽध्यायः )

शेष उवाच ।

एतस्मिन्नन्तरे विप्र ! कण्वोऽप्याश्रममागमत् । शकुन्तला तु पितरं ह्रिया नोपजगाम तम् ॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानेन मारिष ! उवाच भगवान् प्रीतो व्रीडमानां शकुन्तलाम् ॥

कण्व उवाच ।

त्वयाऽद्य भद्रे ! रहसि मामनाभाष्य यः कृतः । पुंसा सह समायोगो नासौ धर्मोपघातकः ॥
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते । सकामायां सकामस्य निर्मन्त्रो रहसि स्मृतः ॥
महात्माऽसौ महाराजः पुरुवंशप्रदीपनः । यः पतिं प्रतिपन्ना त्वं भजमानं शकुन्तले ! ॥
ममापि चिन्ता ह्यासीत् त्वत्प्रदानाय सुन्दरि ! । ययाहं नियतं दग्धो दावेनेव महाद्रुमः ॥
वरं त्वत्सदृशं लोके नान्यमालोकयामि ते । तेनायं निश्चितो राजा मयापि सदृशो वरः ॥
स यदि स्वयमागत्य त्वामगृह्णात् करे नृपः । अभ्यर्थनार्थलघुता न ममाभूद् गरीयसी ॥
महात्मा भविता पुत्रस्तव सुभ्रु ! महाबलः ।
य इमां भोक्ष्यते कृत्स्नां भूमिं सागरमेखलाम् । स्वनाम्ना ख्यातिमप्यत्र वंशे संजनयिष्यति ॥
परञ्चाभिगतस्यास्य चक्रं नाम महात्मनः । भविष्यत्यप्रतिहतं नियतं चक्रवर्त्तिनः ॥

सूत उवाच ।

ततः प्रक्षाल्य पादौ सा सन्निधाय फलानि च । उपविष्टं गतश्रान्तिमब्रवीत् तं शुचिस्मिता ॥

शकुन्तलोवाच ।

यो मयाऽसौ वृतो राजा पौरवः पुरुषोत्तमः । स त्वयानुमतो यस्मात् कृतार्थोऽस्मि पितः प्रभो ! ॥

प्रसादं कुरु तस्यापि सामात्यस्य महीपतेः ॥

कण्व उवाच ।

प्रसन्न एव तस्याहं पूर्वमेव शुचिस्मिते ! । ब्रह्मण्यः पौरवो राजा धर्म्मात्मा च विशेषतः ॥
कं ददामि वरं तस्मै ब्रूहि कल्याणि ! मा चिरम् ॥

शेष उवाच ।

ततो धर्म्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा । शकुन्तला पौरवाणां दुष्मन्तहितकाम्यया ॥

सूत उवाच ।

परेऽहनि मुनौ याते विरहेण शकुन्तला । न लेभे मनसः शान्तिं चिन्तयन्ती महीपतिम् ॥
क्षणं निश्वासबहुला सुष्वाप धरणीतले । लिलेख च नखेन क्ष्मां नाललाप सखीजनैः ॥
क्षणं विलोकयामास दिगन्तान् लोललोचना । ध्यायन्ती जगतीनाथं क्षणं प्राप्तमनोरथा ॥
आस्ते स्म धरणीपृष्ठे ध्यानस्तिमितलोचना । एतस्मिन्नन्तरे विप्र ! दुर्वासास्तपसा ज्वलन् ॥
आजगामाश्रमपदं कण्वस्य द्विजसत्तम ! । दूरादुच्चैर्वभाषेऽथ "केयं पर्णोटजे स्थिता ॥
विलोकयतु मां प्राप्तमतिथिं भोजनार्थिनम्" ॥

शेष उवाच ।

इत्युच्चैर्मुहुराभाष्य न प्राप्यातिथिसत्क्रियाम् । तपोधनश्चुकोपाशु शशाप क्रोधनो मुनिः ॥

दुर्वासा उवाच ।

"यं त्वं चिन्तयसे बाले ! मनसाऽनन्यवृत्तिना । विस्मरिष्यति स त्वां वै अथितौ मौनशालिनीम्"

शेष उवाच ।

इत्येवमुक्ते वचने क्रोधाद् दुर्वाससा तदा । सखी प्रियंवदा नाम शुश्राव क्रोधभाषितम् ॥
त्वरयाऽथ समागम्य पाद्यादिकृतसञ्चया । प्रसादयामास मुनिं मूर्द्ध्ना तच्चरणं गता ॥
"पौरवस्य इयं राज्ञी दुष्मन्तस्य महीभृतः । विश्वामित्रात्मजा बाला मेनकाप्सरसः सुता ॥
कण्वस्य दुहिता चेयं पालनात् सुपतिव्रता । चिन्तयन्ती पतिं मुग्धा विरहेण सुविह्वला ॥
न किञ्चिदभिजानाति न भवांस्तेन सत्कृतः । नावज्ञानान्न गर्वाच्च तद्भवान् क्षन्तुमर्हति ॥
यथा न विस्मरेद्राजा शापान्तं कुरु तापस !" । ततः प्रसन्नो दुर्वासाः प्राह शापान्तकारणम् ॥
विस्मृतिस्तस्य राजर्षेस्तावदेव भविष्यति । प्रियंवदे ! नृपो यावदभिज्ञानं न पश्यति ॥
इति कृत्वा स शापान्तं गृहीत्वा सत्क्रियां ययौ । अथ तस्यास्तदा गर्भो राजर्षेस्तेजसा भृतः ॥
शशीव विशदे पक्षे वर्द्धते स्म दिने दिने । कण्वोऽपि भगवान् दृष्ट्वा दोहदं समुपस्थितम् ॥
मुदा परमया युक्तः पृष्ट्वाभिलषितं हितम् । सम्भावयति वन्यानि मूलानि च फलानि च ॥
अथ तां सप्तमे मासि गर्भे स्फूर्त्तिमुपेयुषि । उवाच भगवान् कण्वो मुनिमण्डलमध्यगाम् ॥

कण्व उवाच ।

"कन्या पितृगृहे नैव सुचिरं वासमर्हति । लोकापवादः सुमहान् जायते पितृवेश्मनि ॥
नार्य्याः पतिर्गतिर्भर्त्ता तपश्च परमं पतिः । दैवतं गुरुरार्य्यश्च पतिः स्त्रीणां परं पदम् ॥
यं प्रसोष्यसि देवि ! त्वं भविता स महाबलः । राजपुत्रो वने स्थास्यत्ययं नाप्युचितो विधिः ॥
अतस्त्वां प्रेषयिष्यामि निकटं तस्य भूभृतः । पत्युः प्रेमा हि नारीणां परं सौभाग्यमुच्यते" ॥

शकुन्तलोवाच ।

"पितस्तेऽनुगृहीतास्मि पतिदर्शनवार्त्तया । नानुज्ञां प्रार्थये तुभ्यं स्नेहभङ्गभयात् तव ॥
न जाने को मया गर्भे धृतोऽयं पुरुषोत्तमः । यत्तेजसा न शक्नोमि स्थातुमेकत्र मारिष ! ॥
तदद्यैव गमिष्यामि राजर्षेस्तस्य चान्तिकम् । अनुज्ञां देहि मे तात ! कृपया तापसोत्तम !" ॥

शेष उवाच ।

तच्छ्रुत्वा भगवान् कण्वः स्नेहप्रसरविप्लुतः । अनुज्ञाप्य मुनीनन्यान् मुनिपत्नीश्च सुव्रताः ॥
उवाच परया प्रीत्या प्रेषयामि शकुन्तलाम् । भर्त्तुर्गृहाय कल्याण्यः ! कल्याणं कुरुत ध्रुवम् ॥
ताश्च वाक्यं मुनेः श्रुत्वा प्रेमाश्रुक्लिन्नलोचनाः । आशीर्भिरनुकूलाभिः प्रायुञ्जत शकुन्तलाम् ॥
विचित्रैरप्याभरणैः केशबन्धादिभिस्तथा । गात्रोद्वर्त्तनसंमार्ष्टि–हरिद्रातैलसङ्गतैः ॥
भूषयामासुरव्यग्रा मुनिपत्नयः शकुन्तलाम् । शुशुभे सा महाभागा विश्वामित्रसुता सती ॥
नितरां गर्भिणी बाला चन्द्रलेखेव विच्युता । अथ गुल्मलतावृक्षान् हरिणान् हरिणाङ्गनाः ॥
उवाच कण्वः प्रेमार्द्रो मुञ्चन्नश्रुकला मुहुः । "युष्माकं परमप्रेम्णा वासितेयं सुता मम ॥
सर्वे ! कुरुत कल्याणं सुखं यातु शकुन्तला" । इति सर्वाननुज्ञाप्य कण्वो मतिमतां वरः ॥
आहूय गौतमीं वृद्धां सखीञ्चास्याः प्रियंवदाम् । उवाच श्लक्ष्णया वाचा शिष्यौ चापि महाव्रतौ ॥
"यात यूयम् महीभर्त्तुर्दुष्मन्तस्य पुरं प्रति । इमां शकुन्तलां राज्ञि समर्प्य पुनरेष्यथ" ॥
इति तस्य वचः श्रुत्वा गौतमी च प्रियंवदा । मुनिः शार्ङ्गरवः शिष्यस्तथा शारद्वतो मुनिः ॥
तथेति प्रतिगृह्याथ मुनेराज्ञां स्वमूर्द्धसु । शकुन्तलां पुरस्कृत्य पन्थानं प्रतिपेदिरे ॥
अथ दक्षिणतस्तस्याः शिवा घोरं ववाशिरे । मृगाश्च चेलुः सव्येन वाता वान्ति स्म धूसराः ॥
तदालोक्य समुद्विग्ना पथि यान्ती शकुन्तला । नितम्बिनी गर्भसत्त्वा न शेके चलितुं द्रुतम् ॥
अथ मध्याह्नसमये प्राप्य प्राचीं सरस्वतीम् । मुनेः शिष्यौ च मध्याह्न-क्रियां चक्रतुरेव तौ ॥
प्रियंवदा गौतमी च सलिलं तज्जगाहतुः । शकुन्तलाऽपि तत्रैव स्नानार्थमुपचक्रमे ॥
प्रियंवदाकरे न्यस्य अभिज्ञानाङ्गुरीयकम् । स्नातुं सरस्वतीतोयमगाहत सुलोचना ॥
प्रियंवदा तु तद् गृह्य वसनाञ्चलमध्यतः । यावन्नयस्तवती तावत् पपात सलिले द्विज ! ॥
प्रियंवदा भिया तस्यै वृत्तान्तं न न्यवेदयत् । शकुन्तलापि तत् सख्यै पप्रच्छापि न विस्मृता ॥

ततः स्नात्वा च ते सर्वे सामाप्य विधिवत् क्रियाम्। दुष्मन्तपुरमासेदुस्तास्त्रियस्तौ च तापसौ॥
राजद्वारं समासाद्य कण्वशिष्यौ महामते !। ऊचतुस्तौ प्रतीहारं "तूर्णं राज्ञे निवेदय॥
काश्यपस्य निदेशेन राजद्वारमिहागतौ। शिष्यौ तस्य शार्ङ्गरव-शारद्वतसमाह्वयौ॥
सुता तस्य च कल्याणी द्वे अन्ये च द्विजस्त्रियौ"। प्रतीहार स्ततो गत्वा राज्ञे सर्वं न्यवेदयत्॥
राजा पुरोधसं प्राह गौतमं हृदि चिन्तयन्। "कथमेतौ मुनेः शिष्यौ स्त्रीभिरेताभिरावृतौ॥
आगताविह संप्राप्तौ भवानेव हि पृच्छतु। किं कण्वस्याश्रमे कश्चिद्राक्षसः कुरुतेऽनयम्॥
न जानाति हि दुष्टात्मा दुष्मन्तं राक्षसान्तकम्। किं वने पशवस्त्यक्ता नियमं मुनिना कृतम्॥
बाधन्ते व्याघ्र-सिंहाद्याः स्त्रियो बालान् जरायुतान्?। मृगयाऽपि मया तावन्न कृता पुरवासिना॥
किं वा वन्यफलान्यद्य प्रभवन्ति न कानने। तेनाहारविनाभावाद् दुःखितास्ते तपोधनाः॥
यदद्यापतितं घोरं मुनीनां दुःखकारणम्। विधुनोमि तदद्यैव याहि पृच्छ तपोधनौ॥
पाद्यादीनि पुरस्कृत्य विधायातिथिसत्क्रियाम्। वासयस्व मुनी विप्र! स्वगृहे ताः स्त्रियस्तथा॥
चेद्विशेषविवक्षापि तयोरस्ति विबुध्य तत्। विज्ञापयिष्यसि पुनस्तद्विचार्य्यं करोम्यहम्"॥

(इति द्वितीयोऽध्यायः)।

शेष उवाच।

इति तद्वाक्यमादाय पुरोधाः स तपोधनः। पाद्यादीनि पुरस्कृत्य द्वारमागतवान् द्विज !॥
राज्ञोक्तं सर्वमाचष्ट ददर्श च शकुन्तलाम्। अन्तःसत्त्वां महाभागां शिरः प्रच्छाद्य वाससा॥
अधोमुखीं चन्द्रकलामिव दीप्तिमतीं पुरः। पप्रच्छ च मुनी "केयं सुन्दरीजगदुद्भवा॥
अन्तःसत्त्वेव कल्याणी लज्जयाऽधोऽमुखी स्थिता"

शिष्यावूचतुः।

"विश्वामित्रसुता चेयं मेनकागर्भसम्भवा। कण्वेन पालिता राज्ञी दुष्मन्तस्य महीपतेः॥
सेयं सम्प्रेषिता ब्रह्मन्। कण्वेन नृपमन्दिरम्। अस्यैव भूपतेस्तेजो बिभ्रती मृगलोचना॥
राज्ञे निवेदयत्वद्य तद्भवांस्त्वरया द्विज !। नेयं राज्ञी द्वारदेशे स्थातुमर्हा महीपतेः"॥
पुरोधास्तदुपाकर्ण्य सम्भ्रमेण महीपतिम्। गत्वा निवेदयामास वृत्तान्तं मुनिभाषितम्॥
दुष्मन्तस्तदुपश्रुत्य विस्मृतिं परमां गतः। उवाच ब्राह्मणं ब्रह्मन्! वचसा कटुना नृपः॥
"नैवं स्मरति मच्चेतः कुत्र का मे विवाहिता। गणिका कापि विप्रेन्द्र! च्छलेन समुपागता"॥

पुरोधा उवाच।

"न तथा दृश्यते राजन्नन्तःस्वत्त्वा वराङ्गना। अनुजानीहि राजेन्द्र! त्वदन्तिकमुपानय॥
विलोक्य परं रूपं यदि ते स्मृतिरुद्भवेत्। प्रवेशनीया शुद्धान्ते नारी श्रीरिव रूपिणी॥

स्थातुमर्हा न च द्वारि द्योतयन्ती दिशस्त्विषा ।
यदि नापि स्मृतिस्ते स्यात् तद्रूपन्तु तथापि ते। विलोक्य भविता नान्यरूपदर्शनलालसा ॥
इति राज्ञानुनीतेनाभ्यनुज्ञातो द्विजोत्तमः । आनाययामास मुनी ताः स्त्रियश्च सुलक्षणाः॥
आशीर्भिरनुयोज्याऽथ कण्वशिष्यौ महामती ।
ऊचतुः कण्वसन्देशं निषण्णौ जगतीपतिम्। "त्वामाशिषा वर्द्धयित्वा प्राह त्वामावयोर्गुरु॥
तच्छृणुष्वमहाराजानन्तरं कर्त्तुमर्हसि । इयं शकुन्तला नाम विश्वामित्रसुतानघ ! ॥
मेनकासङ्गमाज्जाता पालिता दुहिता मम । मृगयाचारिणारण्ये गान्धर्वेण महीपते ! ॥
विधिना यद्गृहीताभून्ममानुज्ञां विनापि हि। तत् साधुरिति तं मन्ये क्षत्रियाणामयं विधिः ॥
तत्र सा विभ्रती तेजो वस्तुं नार्हेटजे मम । महिषी राजराजस्य साक्षात् श्रीरिव रूपिणी ॥
सेयं प्रगृह्यतां राजन्! कल्याणी महिषी तव । जनयिष्यति यं पुत्रमिमं राज्ञी शकुन्तला ॥
चक्रवर्त्ती राजराजो महात्मा स भविष्यति । इत्याशिषा नियुज्य त्वां गुरुराह महातपाः ॥
इयं प्रियंवदा नाम सखी चास्या मुनेः सुता । इयञ्च ब्राह्मणी वृद्धा राजन्! गोतमवंशजा ॥
राजन्! वयमिहायाता अनया गुरुवाक्यतः" ॥

राजोवाच ।

"कति सन्तीह गणिका भ्रमन्ति कामसेवया। राजराजस्य महिषी का नो भवितुमिच्छति ॥
ब्राह्मणा विविधाः सन्ति तापसाश्छद्मरूपिणः । तासामनुग्रहेणैव समं ताभिर्भ्रमन्ति च ।
भुञ्जते विपुलान् भोगान् गणिकाभिरुपार्जितान्" ।
निशम्य नृपतेर्वाक्यं शिष्यौ कण्वस्य तापसौ। शेपतुः "विरहेणास्याः पश्चात्तापमवाप्स्यसि",

शेष उवाच ।

इत्युक्त्वा तौ गतौ क्रुद्धौ तापसौ ब्रह्मवादिनौ। गौतमस्तौ प्रसाद्याथावासयत् स्वे च वेश्मनि ॥
अथ सा गौतमी वृद्धा जगाद जगतीपतिम्। "नैवमर्हसि भो राजन्! विश्वामित्रसुतां प्रति ॥
एवं लावण्यमापन्ना क्व दृष्टा गणिका त्वया ? । अन्तःसत्त्वा महाभागा त्वया राजन् विवाहिता।
समाहितेन मनसा स्मर पश्य च सुन्दरीम्"। इत्युक्त्वा मोचयामास शिरश्छादनमम्वरम्।

राजोवाच ।

"पौरवाणां कुले जाताः सतां मार्गे कृतासनाः। न वयं रूपमात्रेण गणिकानां भ्रमामहे" ॥
एवं वदति भूपाले व्रीडितेव मनस्विनी । निःसख्येन च दुःखेन तस्थौ स्थूणेव निश्चला ॥
संरम्भामर्षताम्राक्षी स्फुरमाणौष्ठसम्पुटा । कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजानमैक्षत ॥
आकारं गूहमाना च मन्युनातिसमीरितम् । तपसा सम्भृतं तेजो धारयामास वै तदा ॥
सा मुहूर्त्तमिव ध्यात्वा दुःखामर्षसमन्विता। भर्त्तारमभिसम्प्रेक्ष्य क्रुद्धा राजानमब्रवीत् ॥

"कथं न स्मरसे राजन्! मृगयामधिगच्छता। गान्धर्वेण गृहीतो यत् पाणिर्मे विधिनानृप!"
इति श्रुत्वा च वचनं शापेनास्तमितस्मृतिः। अब्रवीत् "न स्मरामि त्वां कस्य त्वं दुष्टतापसि!॥
धर्म्मकामार्थसम्बन्धं न स्मरामि त्वया सह। गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत् कुरु॥

शकुन्तलोवाच।

"कुतः प्रियंवदे साध्वि! अभिज्ञानमिहानय। धूर्तमेनं सभामध्ये ह्रेपयामि नराधिपम्" ॥
इत्युक्त्वा पाणिमुत्क्षिप्य भूयोभूयः प्रियंवदाम्। उवाच "देहि देही"ति "ह्रेपयामि नराधिपम्
प्रियंवदा तु नीचैस्तां जगाद मृगलोचनाम्। कर्णान्तिके समासाद्य "पतितं ते तदम्मसि" ॥
तदुपश्रुत्य कल्याणी रम्भेव मरुताऽऽहता। पपात भूमौ निश्चेष्टा "हा हतास्मी"ति वादिनी॥
अथ तां गौतमी वृद्धा वाहुभ्यां मृगलोचनाम्। आश्लिष्य सान्त्वयामास लेभे संज्ञां ततःपुनः॥
अथ क्रुद्धा महाभागा सख्यै राज्ञे च भामिनी। उवाचाश्रूणि सम्मार्ज्य स्मरन्ती पितरं मुनिम्॥
"जानन्नपि महाराज! कस्मादेवं प्रभाषसे। न जानामीति निःशङ्कं यथान्यः प्राकृतो जनः॥
अत्र ते हृदयं वेद सत्यस्यैवानृतस्य वा। कल्पनं वद साक्ष्येण मात्मानमवमन्यथाः॥
योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा॥

एकोऽहमस्मीति च मन्यसे त्वम् न हृच्छयं वेत्सि मुनिं पुराणम्।
यो वेदिता कर्म्मणः पापकस्य यस्यान्तिके त्वं वृजिनं करोषि॥

मन्यते पातकं कृत्वा कश्चिद्वेत्ति न मामिति। विदन्ति चैनं देवाश्च स्वस्यैवान्तरपूरुषः॥

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मो हि जानाति नरस्य वृत्तम्॥

यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम्। हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति॥
न तु तुष्यति यस्यैव पुरुषस्य दुरात्मनः। तं यमः पापकर्माणं निर्यातयति दुष्कृतम्॥
योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते। न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम्॥
स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम्। अर्चार्हां नार्चयसि मां स्वयं भार्य्यामुपस्थिताम्॥
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि। न खल्वरण्ये रुदितमस्तु मे शृणु भाषितम्॥
यदि मे याचमानाया वचनं न करिष्यसि। कण्वशापेन ते मूर्द्धा शतधैव फलिष्यति॥
भार्य्यां पतिः समाविश्य यज्जायेत नराधिप!। जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः॥
यदागमवतः पुंसस्तदपत्यं प्रजायते। तत्तारयति सन्तत्या पूर्वप्रेतान् पितामहान्॥
पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥
मुनिनाऽभिहिता चाहं "तव पुत्रो भविष्यति। राजराजश्चक्रवर्त्ती" न तन्मिथ्या भविष्यति॥

सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥

अर्द्धं भार्य्या मनुष्यस्य भार्य्याः श्रेष्ठतमः सखा। भार्य्या मूलं त्रिवर्गस्य भार्य्यामूलञ्च सन्ततेः
भार्य्यावन्तः प्रमोदन्ते भार्य्यावन्तः श्रियान्विताः। सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः
पितरो धर्म्मकार्य्येषु भवन्त्यार्त्तस्य मातरः । कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै ॥
यः सदारः स विश्रान्तस्तस्माद् दाराःपरा गतिः ॥ संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् ॥
भार्य्यैवान्वेति भर्त्तारं सन्ततं या पतिव्रता। प्रथमं संहिता भार्य्या पतिं प्रेत्य प्रतीक्षते ॥
पूर्व्वं मृतञ्च भर्त्तारं पश्चात् साध्व्यनुगच्छति। एतस्मात् कारणाद्भूप! पाणिग्रहणमिष्यते ॥
यदाप्नोति पतिर्भार्य्यामिह लोके परत्र च। आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः ॥
तस्मात् भार्य्यां नरः पश्येन्मातृवत् पुत्रमातरम्। भार्य्यायां जनितं पुत्रमादर्शेष्विव चाननम् ॥
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत्। दह्यमाना मनोदुःखैर्व्याधिभिश्चातुराः नराः ॥
ह्लादन्ते स्वेषु दारेषु घर्मार्त्ताः सलिलेष्विव। सुसंरब्धोऽपि रामाणां न कुर्य्यादप्रियं नरः ॥
रतिं प्रीतिञ्च धर्मञ्च तास्वायत्तमवेक्ष्य हि। आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम् ॥
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ? । परिपत्य यथा सुनुर्धरणीरेणुगुण्ठितः ॥
पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः। वरं प्रसूय पुत्रं ते विधाय च सुखं तव ॥

गमिष्यामि महाराज! कण्वस्य पितुराश्रमम्।
अण्डानि बिभ्रति स्वानि न भिदन्ति पिपीलिकाः।

न भरेथाः कथं नु त्वं धर्म्मज्ञः सन् स्वमात्मजम्।न वाससां न रामाणां नापां स्पर्शस्तथाविधः॥
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः। ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम् ॥
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः । स्पृशतु त्वां समाश्लिष्य पुत्रो मे प्रियदर्शनः ॥
पश्चादहं गमिष्यामि पितुरेवाश्रमं प्रति । आहर्त्ता वाजिमेधस्य शतसंख्यस्य पौरव ! ॥
भविता तनयस्तेऽयमित्याह मां गुरुर्मुनिः । मृगावकृष्टेन हि ते मृगयां परिधावता ॥
अहमासादिता राजन्! कुमारी पितुराश्रमे । उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ॥
विश्वासी च घृताची च षड़ेवाप्सरसां वराः । तासां मां मेनका नाम ब्रह्मयोनिर्वराप्सराः ॥
दिवः सम्प्राप्य जगतीं विश्वामित्रादजीजनत्। सा मां हिमवतः प्रस्थे सुषुवे मेनकाऽप्सराः॥
अवकीर्य्य च मां याता परात्मजमिवासती। किं नु कर्म्माशुभं पूर्वं कृतवत्यस्मि जन्मनि ॥

यदहं बान्धवैस्त्यक्ता बाल्ये सम्प्रति च त्वया ? ॥

राजोवाच ।

"न गर्भमभिजानामि त्वयि मत्तेजसार्जितम्। असत्यवचना नार्य्यः कस्ते श्रद्धास्यते वचः? ॥

मेनका निरनुक्रोशा बन्धकी जननी तव। ययासि हिमवत्प्रस्थे निर्माल्यमिव चोज्झिता ॥
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव। विश्वामित्रो ब्राह्मणत्वलुब्धः कामवशं गतः ॥
मेनकाऽप्सरसां श्रेष्ठा महर्षीणां पिता च ते। तयोरपत्यं कस्मात् त्वं पुंश्चलीव प्रभाषसे ॥
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे। विशेषतो मत्सकाशे दुष्टतापसि ! गम्यताम् ॥
क्व महर्षिः क्व चैवोग्रः क्वाप्सराः सा च मेनका। क्व च त्वमेवं कृपणा तापसीवेशधारिणी !! ॥
सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे। यदृच्छया कामरागात् कयाचिज्जनिता ह्यसि ॥
सर्वमेतत् परोक्षं मे यत् त्वं वदसि तापसि !। नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया" ॥

(इति तृतीयोऽध्यायः।)

शकुन्तलोवाच।

"राजन् ! सर्षपमात्राणि परच्छिद्राणि पश्यसि। आत्मनो विल्वमात्राणि पश्यन्नपि न पश्यसि ॥
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम्। ममैवोद्रिच्यते जन्म राजेन्द्र ! तव जन्मतः ॥
क्षितावटसि राजेन्द्र ! अन्तरीक्षे चराम्यहम्। अवयोरन्तरं पश्य मेरु-सर्षपयोरिव ॥
महेन्द्रस्य कुवेरस्य यमस्य वरुणस्य च। भवनान्यनुसंयामि प्रभावं पश्य मे नृप ! ॥
सत्यश्च जनवादोऽयं तं प्रवक्ष्यामि ते नृप !। निदर्शनं ब्रवीमीति न कोपं कर्त्तुमर्हसि ॥
विरूपो यावदादर्शे स्वमुखं नैव पश्यति। मन्यते तावदात्मानमन्येभ्यो रूपवत्तमम् ॥
यदा तु मुखमादर्शे विकृतं पश्यते जनः। तदेतरं विजानाति स्वमेव नेतरं नरम् ॥
यस्तु स्याद्रूपसम्पन्नो न स निन्दति कञ्चन। अतीव जल्पन् दुर्वाचो भवतीह विकत्थनः ॥
मूर्खो हि जल्पतां नृणां श्रुत्वा वाचः शुभाशुभाः। अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः। गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥
अन्यान् परिवदन् साधुर्यथा हि परितप्यते। तथा परिवदन्नन्यान् हृष्टो भवति दुर्जनः ॥
अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतिम्। एवं सज्जनमाकुश्य मूर्खो भवति निर्वृतः ॥
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः। तत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥
अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते। यत्र दुर्जन इत्याह दुर्ज्जनः सज्जनं स्वयम् ॥
सत्यधर्म्मच्युतात् पुंसः क्रुद्धादाशीविषादिव। अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः
स्वयमुत्पाद्य वै गर्भं न ममेति वदत्यहो। तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥
पुत्रस्ते भविता राजन्पुत्रस्य महागुणः। चक्रवर्त्ती राजराज उत्तमः सर्वधन्विनाम् ॥
स त्वं नृपतिशार्दूल ! न पुत्रं त्यक्तुमर्हसि। आत्मानं सत्य-धर्मौ च पालयन् पृथिवीपते ! ॥
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः। वरं क्रतुशतात् पुत्रः सत्यं पुत्रशताद्वरम् ॥

अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥
राजन् ! सत्यं परं ब्रह्म सत्यञ्च समयः परम् । मा त्याक्षीः समयं राजन् ! सत्यं सङ्गतमस्तु ते ॥
अनृते चेत् प्रसङ्गस्ते श्रद्दधासि न चेत् स्वयम् । कण्वस्यैवाश्रमं गच्छेः त्वादृशे नास्ति सङ्गतम् ॥
ऋतेऽपि त्वां महाराज ! शैलराजावतंसकाम् । चतुर्वर्णामिमामुर्वीं पुत्रो मे पालयिष्यति ॥
मुनेः कण्वस्य वै वाक्यं भविता कथमन्यथा ?" ॥

राजोवाच ।

"किं नालपन्ति पुंश्चल्य एवमेव सुदुर्वचः ? । याहि त्वं गच्छ वाचाटे ! दूषयिष्यन्ति मां जनाः"

पुरोधा उवाच ।

"अत्र वक्ष्यामि ते मन्त्रं शृणु राजन् महामते ! । यावत् प्रसवमत्रैव नारी तिष्ठतु ते गृहे ॥
यदि ते सदृशं पुत्रं कामिन्येषा प्रसोष्यति । ततस्तवैव भार्य्येति वेत्स्यामस्तदनन्तरम् ॥
शालिबीजाद्विजायेत न कदाचिद् यवाङ्कुरः" ॥

राजोवाच ।

"नैषा शुद्धान्तमध्येऽपि मम वासमिहार्हति । संसर्गादपि पुंश्चल्यो दूषयन्ति कुलस्त्रियः" ॥

पुरोधा उवाच ।

"अदृष्टतनयास्योऽसि राजराजोऽपि भूतले । अतस्त्वत्सन्ततौ श्रद्धा राजन् ! मे जायतेऽधिका
इयं साध्वी वरारोहा कण्वेन परिपालिता । व्यभिचारमतो राजन् ! नाहं मन्ये मनागपि ॥
यावत् प्रसवमेतान्तु वासयेऽहं निजालये । प्रसवे सति कल्याणीं स्वयमेव ग्रहीष्यसि" ॥

शेष उवाच ।

इत्युक्त्वा गौतमो ब्रह्मन् ! सान्त्वयित्वा शकुन्तलाम् ! स्वगृहायैव तां नेतुं विमना उपचक्रमे ॥
सा चापि मुक्तकण्ठं वै रुदती मृगलोचना । शनैःशनैर्गौतमं तमनुगन्तुं प्रचक्रमे ॥
एतस्मिन्नन्तरे विप्र । मेनकाऽप्सरसां वरा । तेजोरूपा व्योममध्यात् तडित्पातं पपात सा ॥
"किमिदं किमिदं चित्रम्" इति जल्पत्सु सर्वतः । सभास्थेषु च सर्वेषु तेजसा धर्षितेषु च ॥
आलोकनेऽप्यशक्तेषु दुष्मन्ते भयविह्वले । शकुन्तलां समादाय अङ्कमारोप्य सत्वरा ॥
अम्बरं विजगाहे सा तत् केनापि न लक्षितम् । एवं गते तु दुष्मन्तः खेदमाप ततो भृशम् ॥
देवेन चरितां मायामबुध्यत तदा नृपः ॥

( इति चतुर्थोऽध्यायः ) ।

शेष उवाच ।

एकदा स महीपालो मन्त्रिभिर्ब्राह्मणैः सह । प्रजानां वेदितुं वृत्तं बभ्राम नगरे द्विज ! ॥
तत्र राजभटः कश्चिद् दृढमाबध्य धीवरम् । दण्डेन ताडयन्नुग्रैर्वचोभिः समतर्जयत् ॥
"राजाऽऽभरणमेतद्वै यत् त्वया चोरितं छलात् ! अतो बध्यत्वमापन्नं त्वां नयामि नृपान्तिके"

इत्युक्त्वा तं करे गृह्य ताडयन् बहु मूर्द्धनि । राजान्तिकमुपानीय राजानमिदमब्रवीत् ॥
"एष धीवरको राजन्! चोरयित्वाऽङ्गुरीयकम् । त्वन्नामचिह्नितं लोके विदितं रत्ननिर्मितम् ॥
विक्रेतुमुद्यतः पापो मया दृष्टो महीपते !" । राजा तं प्राह दाशेदं "कुतो लब्धमिह त्वया ॥
कथयाभयमेतत् ते दत्तं जानीहि साम्प्रतम्" ॥

धीवरउवाच ।

"जात्याहं धीवरो राजन्! मत्स्यमात्रोपजीवकः । चौरिकां नैव जानामि न च सूनां न धूर्त्तताम्
जालेन मत्स्यान् बध्नामि सरस्वत्या हि रोधसि । एकदा जालमातत्य सरस्वत्यामहं नृप! ॥
स्थितः प्रत्याशया तत्र तीरस्थं तरुमास्थितः । रोहितः कोऽपि सुमहान् जाले बद्धो बभूव ह ॥
ततोऽहं जालमुत्तार्य्य दृष्ट्वा रोहितमुद्धतम् । खड्गेन कृत्तवान् सद्यः परमानन्दनिर्वृतः ॥
ततस्तदुदरे लब्धमेतद् भूपाङ्गुरीयकम् । कस्येति न विजानामि तदहं नगरे तव ॥
विक्रेतुमागतो बद्धो भटेनानेन भूमिप !" ॥

राजोवाच ।

"देहि पश्यामि कस्यैतत् किंरूपमङ्गुरीयकम् । त्वमेतन्मूल्यमागृह्य सुखेनैव व्रजालयम्" ॥

शेष उवाच ।

इत्युक्त्वा पाणिनादाय यावद्राजा स पश्यति । निपतन्ति स्म नेत्राभ्यां तावदेवाश्रुबिन्दवः ॥
प्रेयसीं तामनुस्मृत्य तथा गान्धर्वकर्म च । गर्भाधानञ्च सर्वं तन्मूर्च्छितो निपपात ह ॥
तदा पुरोहितामात्या भृशमुद्विग्नचेतसः । उत्थाप्य तं महीपालं निवेश्य च वरासने ॥
लब्धसंज्ञं शनैर्ब्रह्मन्! पप्रच्छुः "किमिदं तव" । दुष्मन्तोऽपि समाश्वस्य प्रेयसीं तामनुस्मरन्
निश्वस्य दीर्घमुष्णञ्च अश्रुमिश्रमभाषत । "प्रत्याख्याता वरारोहा मन्दभाग्येन यन्मया ॥
तदद्य मां दुनोत्येव अङ्गुरीयस्य दर्शनात् । तया यदुक्तं मां प्राप्य मम तेजो दधानया ॥
नानृतं तत्र वै किञ्चिन्मयैवानृतकं कृतम् । मृगयाचारिणारण्ये सैव कण्वाश्रमे मया ॥
गान्धर्वेणैव धर्मेण निर्बन्धेन विवाहिता । उषितञ्च तया सार्द्धं प्रतिज्ञातञ्च सर्वथा ॥
बलेन चतुरङ्गेण नयिष्ये नगरं प्रति । अभिज्ञानञ्च मे दत्तमेतद्रत्नाङ्गुरीयकम् ॥
केनापि दैवयोगेन सर्वं तद्विस्मृतं मया । हन्त पापं कृतं भूरि मया निष्करुणात्मना ॥
आसन्नप्रसवा भार्य्या त्यक्ता देवसुतोपमा । अनुकूलो न मे धाता नरकान्न च निष्कृतिः ॥
प्रतिज्ञापूर्वकं पाणिगृहीती यद्विवर्जिता । श्रीरूपिणी समागत्य स्वयमेव कृपान्विता ॥
अर्पयन्ती महारत्नं यथा केनापि वर्जिता । तथा मया पुत्रफला परा साध्वी पतिव्रता ॥
याचमाना सवैयग्र्य दूरादेव विवर्जिता । मेनकाऽप्सरसो जाता विश्वामित्रसुता सती ॥
कण्वेन पालिता कन्या चारुशीला तपस्विनी । चिन्तामणिरिवायाता काममर्पयितुं स्वयम् ॥

मया निराकृता बाला अन्तःसत्त्वा सुलोचना । कल्पवल्लीव कामानां सम्प्रदानेऽभ्युपस्थिता ॥
उन्मूलिता मया तन्वी प्रसोष्यन्ती नरोत्तमम् । संरम्भारुणनेत्रायाः स्मरचापायितभ्रुवः ॥
वचांसि गूढगर्वाणि विदुन्वन्ति स्मृतानि माम्" ॥

शेष उवाच ।

एवं विलपमानं तं राजानं गौतमोऽब्रवीत् । "तद्यातं नानुशोचस्व समाश्वस परन्तप !॥
कथितञ्च मया तत्र दृष्ट्वा तस्याः सुलक्षणम् । तद्रूपशालिनी बाला राज्ञो भवितुमर्हति ॥
सा हि मेनकया जाता चारुरूपा मनस्विनी । देवीव नावमानार्हा त्वया राजन् ! विवाहिता ॥
यद्भूतं महदाश्चर्य्यं प्रत्याख्यातवति त्वयि । तद्दृष्ट्वा के न शोचन्ति वदन्तस्त्वां हतश्रियम् ॥
भद्रं वाप्यथ वाऽभद्रं प्रियमप्रियमेव वा । यद्यातं तद्गतं राजन् ! नानुशोचन्ति पण्डिताः" ॥
विमृषत्स्वेव तेष्वेवं देशान्तरचरश्चरः । राज्ञे निवेदयामास यद्दृष्टं सागराम्भसि ॥
"राजन् ! सांयात्रिको नाम्ना धनवृद्धिर्महाधनः । विपन्नः सागरे सप्त वाहयन् सम्भृतास्तरीः ॥
स चानपत्यस्तस्येष्टा नावो रत्नैः प्रपूरिताः । तवैव कोषमर्हन्ति गृह्यन्तामचिरेण ताः" ॥

राजोवाच ।

"यान्तु मे मन्त्रिणः सम्यग् जानन्तु तत्परिग्रहान् ।
यदि काचित् भवेद् भार्य्या गर्भिणा बणिज क्वचित् । सैव तद्धनमादद्यान्नाधिकारी तदा नृपः" ॥

शेष उवाच ।

तच्छ्रुत्वा मन्त्रिणो गत्वा विज्ञाय च विशेषतः । राज्ञे निवेदयामासुर्वृत्तान्तं ब्राह्मणर्षभ ! ॥
"अत्रैव नगरे राजन् ! भार्य्या तस्य विलासिनी । अन्तःसत्त्वा बणिक्पुत्री वर्त्तते च पतिव्रता" ॥
राजा प्राह "तरीस्थानि यानि यानि धनानि च । तानि तस्यै ददत्वद्य भटा मे यान्तु सत्वराः" ॥
इति प्रस्थाप्य राजेन्द्रो भटांस्तद्धनरक्षणे । द्विगुणेनैव शोकेन दह्यते स्म ततोऽब्रवीत् ॥
"एवमेव ममाप्यन्ते मम राजस्य दुर्गतिः । कं यास्यति महीयं हि धार्म्मिकं वाप्यधार्मिकम् ॥
अन्तःसत्त्वा महाभागा या मे भार्य्याप्युपस्थिता । उपेक्षिता प्रमादेन मन्दभाग्येन सा मया ॥
अत ऊर्द्ध्वं मया दत्तं पानीयं विविधानि च । पास्यन्ति पितरः कोष्ण-निश्वासेन मलीमसम् ॥
पिण्डविच्छेददुःखार्त्ताः पिण्डानि च तथैव हि । क्व लभ्यते सा ललना साक्षात् श्रीरिव रूपिणी ॥
न मन्दभाग्यं पापिष्ठं ज्ञात्वा मां पुनरेष्यति । नैवंविधस्य दुष्टस्य दारुणस्य दुरात्मनः ॥
तथाविधा वरारोहा भार्य्या भवितुमर्हति" । एवं विलपमानस्य दुष्मन्तस्य महीपतेः ॥
व्यतीयुस्त्रीणि वर्षाणि शोचतोऽहर्निशं द्विज ! । अथासौ देवराजेन समाहूतो ययौ दिवम् ॥
त्रिदिवेशैरवध्यानां निधनाय सुरद्विषाम् । निर्वाह्य देवताकर्म रथं मातलिसारथिम् ॥

आरुह्य भुवमायास्यन् मारीचाश्रममागमत् । तत्र काचिज्जरा [illegible]री ब्राह्मणी बालमद्भुतम् ॥
लालयन्ती नृपं वीक्ष्य ददावासनमन्तिके । बालस्तु तावद्वेगेन प्रविश्य गहनं वनम् ॥
निबध्य पञ्च पञ्चास्यान् लताभिः समुपानयत् । उवाच वृद्धामेतेषां "कति दन्ताः समुन्नताः ?॥
नाम्ना वा कति मध्या वा गणयित्वा वदाशु मे"! । दुष्मन्तस्तु तदालक्ष्य बालस्याद्भुतविक्रमम्
चिन्तयामास मेधावी भार्य्याविरहकातरः । "पौरवादप्यहो बालो धत्तेऽधिकपराक्रमम् ॥
सर्वराजश्रिया युक्तो न विप्रस्तदयं भवेत् । चेतो मे वहते स्नेहं दृष्ट्वा बालं दुरासदम् ॥
कारणं तत्र पश्यामि यन्ममेयमपुत्रता" । इति चिन्तापरे राज्ञि सिंहः कोऽपि स्वबन्धनम् ॥
छित्वा नखेन दुर्वार्य्यो गन्तुं प्राक्रमत द्विज ! दूरादुत्प्लुत्य तं बालो निगृह्य पुनरेव तम् ॥
उवाच "किं रे पञ्चास्य ! प्राप्तोऽसि ब्रह्मबालकम् । पौरवोऽस्मि न जानासि क्षत्रियो रणकोविदः ?
तदुपश्रुत्य राजर्षेः किञ्चिदुच्छसितं मनः । बालभाषितमित्येव सम्यक् श्रद्धापि नो भवेत् ॥
अथागमत् कश्यपोऽपि वनात् कुशसमिद्धरः । विलोक्य तत्र राजानं दुष्मन्तं मुमुदे भृशम् ॥
आशीर्भिस्तमथाभ्यच्चर्य विधायातिथिसत्क्रियाम् । पप्रच्छ कुशलं राज्ये देवानाञ्च तपोधनः ॥
राजा तत् सर्वमाचष्ट मुनिवाचा गतश्रमः । अथोवाच विहस्येषत् "कोऽयं बालस्तपोधन ! ॥
महाबलो महाबाहुः पौरवोऽहम्" इति ब्रुवन् ।

कश्यप उवाच ।

"तवैव तनयो राजन् ! यमसूत शकुन्तला । दमनः सर्वसत्त्वानां सिंहादीनां महाबलः ॥
तत् सर्वदमनो नाम मयैवास्य निरूपितम् । भरस्वेति च वच्मि त्वां ततोऽसौ भरतो भवेत् ॥
दुर्वाससो हि शापेन त्वया या विस्मृता पुरा । त्यक्ता मेनकयानीय मयि न्यस्ता मनस्विनी ॥
सा ते शकुन्तला राज्ञी सुषावेमं कुमारकम् । महाबलो महाप्राणो दुर्द्धर्षः सर्वभूभुजाम् ॥
बद्धैः क्रीडति पञ्चास्यैः प्रविभेत्यपि नान्तकात् । मया विसृष्टं दुर्दान्तः शिशुरेष ममाश्रमे ॥
वस्तुं नार्हति बाल्याद्धि कदा किं नु समाचरेत् । अत एनं महीभर्त्तुः सुतं तं प्रापयाम्यहम् ॥
त्वमथो देवकार्य्यार्थं गतः स्वर्गं ततो मया । कृतो विलम्बो राजर्षे ! शापान्तेऽपि तव प्रभो ! ॥
एष ते गृह्यतां पुत्रश्चक्रवर्त्ती भविष्यति । आहर्त्ता सर्वयज्ञानां महाभागवतो नृप !" ॥
इत्युक्त्वा ब्राह्मणीं प्राह वृद्धां देवगुरुर्मुनिः । "शकुन्तलामिहानीय समर्पय महीमतौ" ॥
तच्छ्रुत्वा ब्राह्मणी गत्वा समाहूय शकुन्तलाम् । राज्ञे समर्पयामास राजा च मुमुदे भृशम् ॥

शेष उवाच ।

अथाऽनुज्ञाप्य मारीचं सभार्य्यः सुसुतो नृपः । हृष्टः स्वपुरमागच्छद्देवयानेन मारिष ! ॥
स एव भरतो नाम दुष्मन्ततनयो महान् । ववृधे तत्र विप्रेन्द्र ! शुक्लपक्षे यथा शशी ॥

(इति पञ्चमोऽध्यायः) ।

## अभिज्ञानशकुन्तलाभिनेयेऽभिहितानां किशोरकेलिव्याख्यायां समन्वितानां नाटकीयपदार्थानां

# सूचना ।

पृष्ठसंख्या ।

पृष्ठसंख्या ।



## तृतीयोऽङ्कः ।

पृष्ठसंख्या ।

पृष्ठसंख्या ।



## चतुर्थोऽङ्कः ।

पृष्ठसंख्या ।



## पञ्चमोऽङ्कः ।

पृष्ठसंख्या ।

पृष्ठसंख्या ।



इति नाटकीयपदार्थसूचना ।

# अभिज्ञानशकुन्तलस्थपात्राणां परिचयः ।

## पुरुष पात्रगणः ।

| | | |
|---|---|---|
| सूत्रधारः | ... | नाटकारम्भे ईश्वरस्मरणकारी प्रधाननटः । |
| दुष्मन्तः | ... | नाटकस्यास्य नायको हस्तिनाधिपतिः । |
| सूतः | ... | दुष्मन्तस्य सारथिः । |
| वैखानसः | ... | अरण्यनिवासी तपस्वी । |
| माधव्यः | ... | राज्ञो नर्मसचिवो विदूषकः । |
| भद्रसेनः | ... | राज्ञो दुष्मन्तस्य सेनापतिः । |
| रैवतकः | ... | द्वारपालकः । |
| ऋषिकुमारौ | ... | कण्वाश्रमवासिनौ । |
| करभकः | ... | हस्तिनापुरादागतो दूतः । |
| यजमान शिष्यः | ... | महर्षेः कण्वस्य शिष्यविशेषः । |
| हारीतः | ... | ,, |
| कण्वः | ... | शकुन्तलाया रक्षको महर्षिः । |
| शार्ङ्गरवः<br>शारद्वतमिश्रः | ... | कण्वस्य प्रधानशिष्यौ । |
| कञ्चुकी | ... | पार्वतायननामा सौविदल्लः । |
| पुरोधाः | ... | सोमरातनामा राज्ञो दुष्मन्तस्य पुरोहितः । |
| नागरक श्यालः | ... | नगररक्षको राज्ञः श्यालकः । |
| सूचकः<br>जालुकः | ... | रक्षिणौ । |

| | | |
|---|---|---|
| पुरुषः | ... | मुद्रिकाप्राप्तिकारी धीवरः । |
| मातलिः | ... | इन्द्रसारथिः । |
| सर्वदमनः–भरतश्च | ... | राज्ञः सुतः शाकुन्तलेयः । |
| मारीचः | ... | मरीचेः सुतः कश्यपः । |
| गालवः | ... | कश्यपशिष्यः । |

## स्त्री–पात्रगणः ।

| | | |
|---|---|---|
| शकुन्तला | ... | ऋषिकण्वपालिता पुत्री नाटकस्यास्य नायिका । |
| अनुसूया, प्रियंवदा | ... | शकुन्तलासख्यौ । |
| गौतमी | ... | महर्षेः कण्वस्य धर्मभगिनी । |
| प्रतीहारी | ... | राज्ञः पार्श्ववर्तिनी । |
| मिश्रकेशी | ... | शकुन्तलायाः शुभचिन्तिका सखी । |
| तापस्यः | ... | कण्वश्रमस्था मुनिपत्न्यः । |
| परभृतिका, मधुरिका | ... | चित्रकरणार्थं विदेशादागतं दासीद्वयम् । |
| चतुरिका | ... | राज्ञो दासी । |
| तापसीद्वयम् | ... | कश्यपाश्रमस्थं सर्वदमनकरक्षकम् । |
| अदितिः | ... | देवमाता कश्यपपत्नी । |

॥ इति ॥

॥ श्रीः ॥

महाकविश्रीकालिदासप्रणीतम्—

# अभिज्ञानशकुन्तलम्

यास्कश्रीनवकिशोरशास्त्रिकृत–'किशोरकेलि'–समेतम् ।

## प्रथमोऽङ्कः

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्व्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रसन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥

॥ श्रीसरस्वत्यै नमः ॥

मुग्धे ! सुन्दर ! यामि शैलशिखरं, किं तत्र, माहेश्वरि !
ध्यानार्थं, ननु नास्ति काचिदपरा तातस्य गेहे पुनः ।
इत्थं पर्वतनन्दिनीकुतुककृद्वागीः सुधाह्लादिनीः
शृण्वन् नष्टसमाधिधीः पशुपतिः पायादपायाज्जगत् ॥ १ ॥
कालिदासमपि भाषणेऽक्षमं या चकार सुकवित्वभाजनम् ।
गद्यपद्यमयशब्दरूपिणीं तां नमामि जगदिष्टसिद्धये ॥ २ ॥

इह खलु महाकविकुलशिरोमणिस्तत्रभवान् कालिदासः निर्मित्सिताभिनवनाटकस्य निर्विघ्नपरिसमाप्तिमभिलषन् "रङ्गविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजयेत्"

---

भगवान् शिवजी की जो जलमयी मूर्ति ब्रह्मा की सर्वप्रथम सृष्टि है, जो अग्निमयी मूर्ति वैदिक विधान से हवन की हुई सामग्रियों को–जिन देवताओं के लिए हवन की जाती, उसे–उन

इत्यालङ्कारिकवचनमनुसरन् परमेश्वरनामसङ्कीर्तनरूपां नान्दीमादौ निर्दिशति— या सृष्टिरिति । या तनुः—मूर्तिः, स्रष्टुः—जगन्निर्माणकर्तुः परमेश्वरस्य, आद्या सृष्टिः-प्राथमिकनिर्माणं, जलरूपेत्यर्थः । तथा चोक्तं मनुना—

"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥" इति ।

या मूर्तिः, विधिना—होमीयशास्त्रानुसारेण, वैदिकेन विधानेन चेत्यर्थः, हुतं—देवतोद्देशेनाग्नौ प्रक्षिप्तं हवनीकृतमिति यावत्, हविः—आज्यं हवनीयद्रव्यम्, वहति-यजमानस्य स्वर्गाद्युद्देश्येन देवान् प्रापयति, अग्निमयीति भावः । तथा च श्रुतिः—"इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्" इति ।

या च तनुः, होत्री—हवनकर्त्री यजमानरूपेत्यर्थः । एतेन भगवतो विविध-जीवात्मकत्वमपि संसूच्यते । किञ्चास्य होतृत्वे प्रमाणम्? इति चेन्न, "मुख्यालाभे प्रतिनिधिः शास्त्रार्थः" इति... उक्तिरेवात्र शरणम् ।

ये द्वे मूर्ती, कालं—अहोरात्रस्य तिथेश्च प्रवर्त्तनात् सौरं चान्द्रञ्च मासर्त्तुव-र्षादिरूपं समयं, विधत्तः—निष्पादयतः, सूर्यचन्द्ररूपे इत्यर्थः । तथा च सूर्य-सिद्धान्तः—"उदयादुदयाद्भानोर्भौमसावनवासराः" इति ।

श्रुतेः—श्रवणस्य विषयः—शब्दः स एव गुणो यस्याः सा तथोक्ता, आका-शमयीत्यर्थः, तथा चोक्तिः—"आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः" इति, "शब्दोऽपि च श्रुतेः" इत्यपि; या मूर्त्तिः, विश्वं—सकलं जगत्, व्याप्य—सम्बध्य, स्थिता—विद्यमानाऽस्ति, नभोरूपेत्यर्थः ।

यां मूर्तिम्, सर्वबीजानां—सर्वेषां धान्यादिशस्यानां प्रकृतिः—योनिः, अङ्कुरा-द्युत्पादने कारणम्, इति आहुः—ब्रुवन्ति, बुधा इति शेषः । पृथ्वीरूपेति भावः ।

---

उन देवताओं के पास पहुँचाती है, ईश्वर की जो मूर्ति स्वयं होत्री अर्थात् यजमानस्वरूपा है, जो चन्द्रसूर्यात्मक दो मूर्तियाँ दिन तथा रात करती रहती हैं, श्रवणेन्द्रिय का विषयीभूत शब्दों का आश्रय, जो आकाशमयी मूर्ति सारे विश्वमें व्याप्त होकर विद्यमान रहती है, जो क्षितिमयी मूर्ति सब प्रकारके अन्नों की बीजस्वरूपा है और जिससे संसारके सब प्राणी जीवित रहते हैं, वह वायुमयी मूर्ति, ये जो प्रत्यक्ष दृश्यमान भगवान् की आठ मूर्तियाँ हैं, उन आठोंसे ( उपलक्षित ) प्रसन्न शिवजी आप लोगों की रक्षा करें ॥ १ ॥

[ नान्द्यन्ते(१) ]

यया च मूर्त्या, प्राणिनः—शरीरिणः, प्राणवन्तः—जीवनवन्तः, प्राणादिवायुपञ्चकशोभिन इत्यर्थः, भवन्तीति शेषः। वायुरूपेत्याशयः। ताभिः—पूर्वोक्ताभिः, प्रत्यक्षाभिः—स्पष्टं लौकिकालौकिक-प्रत्यक्षगोचरीभूताभिरत एव कथमप्यपलपितुमशक्याभिरिति भावः। तनुभिः—मूर्तिभिः [ उपलक्षितः ], प्रसन्नः—जगत्सु कृतप्रसादः, सर्वत्र प्रकाशितस्वदसामर्थ्य इति भावः, ईशः—महेश्वरः, वः—युष्मान् विक्रमादित्यादिनृपतीन् सभ्यजनांश्च, अवतु—रक्षतु। ईशस्याष्टमूर्तित्वे प्रमाणं यथा—"सूर्यो जलं मही वह्निर्वायुराकाशमेव च। दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृताः। इति—विष्णुपुराणम्। स्रग्धरा नाम छन्दः, "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात्।

अत्र—'प्राणिनः प्राणवन्तः, इति शब्दद्वयार्थैक्येन आपाततः पुनरुक्तेः प्रतीततया पुनरुक्तता प्रतिभाति, किन्तु "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इत्यमरवचनात् प्राणिपदेन शरीरिमात्राभिधानेन भेदात् भिन्नाकारशब्दगतत्वाच्चोद्देश्यविधेयभावेन भेदात् पुनरुक्तवदाभासोऽलङ्कारः। तथा चोक्तं दर्पणकारेण—

"आपाततो यदर्थस्य पौनरुक्त्यावभासनम्।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥" इति।

तथा श्रुतिविषयगुणा इत्यनेन आकाशरूपार्थप्रतीतौ कालक्षेपात् क्लिष्टत्वदोषः। तथा चाह दर्पणे विश्वनाथः—

"अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता" इत्युद्दिश्य, क्लिष्टत्वं च—'अर्थप्रतीतौ व्यवहितत्वम्'मिति।

तस्य निवारणन्तु—'वितथरवगुणा' इति पाठेन विधेयं कविभिः।

(१)नान्द्यन्ते इति। विघ्नोपशान्तये प्रथमं विधीयमाना शुभाशीर्वचनसंयुक्ता देवविप्रनृपादीनां स्तुतिः 'नान्दी'। तथा च दर्पणे—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥" इति।

इह च अष्टविधतनुवर्णनेन परमेश्वरस्य भगवतः सदाशिवस्य स्तुतिः रङ्गस्थ-

सम्यानामाशीश्चेत्युभयमपि सन्दर्शितम्, किञ्च—"ये द्वे कालं विधत्तः" इत्यंशेन चन्द्रशंसित्वमपि सूचितम् । श्लोकान्तर्वर्त्त्येकैकं वाक्यमेवात्रैकैकं पदं भवति । तथाहि—

'या स्रष्टुराद्या सृष्टिः' इत्येकम्; 'या विधिहुतं हविर्वहति' इति द्वितीयम्; 'या च होत्री' इति तृतीयम्; 'ये द्वे कालं विधत्तः, इति चतुर्थम्; 'श्रुतिविषयगुणा या विश्वं व्याप्य स्थिता' इति पञ्चमम्; 'यां सर्वबीजप्रकृतिरित्याहुः' इति षष्ठम्; 'यया प्राणिनः प्राणवन्तः' इति सप्तमम्; 'प्रसन्नः ईशः ताभिः प्रत्यक्षाभिरष्टाभिस्तनुभिः वः अवतु' इति त्वष्टमं वाक्यरूपं पदम् । इत्येवमष्टपदात्मिकेयं नान्दी । न च पूर्वोक्तकैकवाक्यस्य त्वेकैकपदत्वे किं मानम्? इति वाच्यम्—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे ।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥"

इति 'नाट्यप्रदीपप्रतिपादितवाक्यस्य समुपस्थितत्वात् । ननु पुनः किन्नामिकेयं नान्दी? इत्युच्यते—'या स्रष्टुराद्या सृष्टिः'इत्यंशेन सर्वोपरिस्थितत्वादादिमतया 'कण्वरूपा, काचिद्व्यक्तिः सूच्यते । 'या विधिहुतं हविर्वहति' इति पदांशेन महाराजदुष्मन्तवितरितवीर्यप्रवहणात् 'शकुन्तला' इति । 'ये द्वे कालं विधत्तः' इत्यनेन राजवीर्यनिक्षेपसमयसम्पादनात् 'अनसूया—प्रियंवदे' इति व्यक्तिद्वयं निर्दिश्यते । 'या विश्वं व्याप्य स्थिता' इत्यनेन गगनसम्पर्किणी मिश्रकेशी । 'यां सर्वबीजप्रकृतिरित्याहुः' इत्यनेन परब्रह्मरूपत्वात् 'अदितिकश्यपौ' । 'प्राणिनो यया प्राणवन्तः, इत्यंशेन च सर्वाण्येव पूर्वापरनिर्दिष्टानि सूतविदूषकादीनि पात्राणि निर्दिश्यन्ते; पवनेन प्राणिनां प्राणवत्त्वलाभ इव अस्यापि काव्यस्य तैस्तैः पात्रैरेव नाटकत्वलाभात् । अत एवेयं पत्रावलीसंज्ञिका नान्दीति । किमत्र प्रमाणम्? इति चेच्छृणु,—

"यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा ॥"

इति दर्पणोक्तम्

नान्द्याः—उक्तलक्षणरूपाया अन्ते—पाठसमाप्तौ,—

(१) (विघ्नशान्तिके लिये सबसे पहले जो ईशप्रार्थना की जाती है, उसे लोग 'नान्दी' कहते हैं, वह नान्दी हो जानेके बाद)

सूत्रधारः—अलमतिविस्तरेण(१) । [ नेपथ्याभिमुखमवलोक्य ] आर्ये ! यदि नेपथ्यविधानमवसितं तदिहागम्यताम् (२) ।

सूत्रधारः—सूत्रं नाटकीयकथासूचकवाक्यं धारयति समुपस्थापयति यः सः—प्रधाननट इत्यर्थः । तथाहि—

"नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः ॥" इति ।

अपरञ्च—"नाटकीयकथासूत्रं प्रथमं येन सूच्यते ।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥" इति ।

एवञ्च—"चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः ।
नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥
वेशोपचारचतुरः पौरेषणविचक्षणः ।
नानागतिप्रचारज्ञो रसभावविशारदः ॥
नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः ।
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ॥
तत्तद्गीतानुगलयकलातालावधारणः ।
अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः ॥
एवं गुणगणोपेतः सूत्रधारोऽभिधीयते ।" इति ।

(१)अलमिति । अतिविस्तरेण—नान्दीपाठस्य अत्यन्तप्राचुर्येण, अलम्—इतोऽधिकं नान्दीपाठो मा विधेय इत्यर्थः । यदीतोऽपि बहुतरं नान्दीपाठो भवेत्तदा कालक्षेपो भविष्यति, अतोऽधिकनान्दीपाठविधानं व्यर्थमेवेति तात्पर्यम् । अत्र वारणार्थे तृतीया । विस्तर इत्यत्र—"प्रथने वावशब्दे" ( पा० ३।३।३३ ) इति शब्दप्रथने घञ् प्रत्ययस्य निषेधादप् प्रत्ययः । अन्यत्र तु विस्तारः, वृक्षासनयोस्तु विष्टर इत्येव भवतीति बोध्यम् ।

(२) नेपथ्याभिमुखमिति । नेपथ्याभिमुखं—वेशरचनागृहाभिमुखम् अवलो-

( १ ) सूत्रधार—बस, अब ज्यादा विस्तार करने की आवश्यकता नहीं ( नेपथ्य की ओर देख कर ) ।

( २ ) आर्ये ! नेपथ्य विधान ( खिलाड़ियों का वेश-भूषासे सुसज्जित होना आदि काम ), समाप्त हो चुका हो तो यहाँ आओ ।

**नटी**—[प्रविश्य] अज्ज ! इअह्मि । आणवेदु अज्जो को णिओओ अणुचिट्ठिअदु त्ति (१) ।

**सूत्र**—आर्य्ये ! इयं हि रसभावदीक्षागुरोर्विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषत् । अस्यां च कालिदासग्रथितवस्तुना नवेनाभिज्ञानशकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः, तत् प्रतिपात्रमाधीयतां यत्नः(२) ।

(१) आर्य्ये ! इयमस्मि । आज्ञापयतु आर्य्यः को नियोगोऽनुष्ठीयतामिति ।

क्य—अत्र नटी विद्यते न वा इति दृष्ट्वा । यदि अन्यत्र सभाभिमुखं दृष्टिं निक्षिप्य सम्बोधयेत्तदाऽवश्यं तस्य लोकानभिज्ञत्वं स्यात् , सम्बोध्यस्य वस्तुनः तदुपस्थितिस्थानाभिमुखेनैव सम्बोधनं विधेयमिति लोकव्यवहारसिद्धत्वात् । अन्यथा विरक्ताः सभ्या भवेयुरित्यवधेयम् ।

आर्ये—श्रेष्ठे, साध्वि, प्रिये, "पत्नी चार्य्येति संभाष्या" इति भरतः । पत्न्याः सम्बोधनमिदम् । आर्यपदं तद्भार्यायाः सदाचारिणीत्वं सूचयति । न च नटोक्तौ 'आर्य्ये' इति सम्बोधनमनुचितमिति वाच्यम् , "वाच्यौ नटीसूत्रधाराचार्य्यनाम्ना परस्परम्" इति साहित्यदर्पणोक्तेर्विद्यमानत्वात् । नेपथ्यविधानम्—पात्रावबोधकवेशरचना, शृङ्गारविधानमिति वा । यदि अवसितं—परिसमाप्तम् , तत्—तदा, इह—अस्मिन् स्थाने, आगम्यताम्—त्वमागच्छेत्यर्थः ।

(१)नटीति । प्रविश्य—रङ्गशालायामिति शेषः, प्रवेशं विधाय । आर्य्य—प्रिय, सूत्रधारसंबोधनमिदम् , इयमहम्—[ नटी स्वात्मानं निर्दिशति—इयमहमिति ] अस्मि—उपस्थिता, आगतास्मीत्यर्थः । आर्य्यः—पूज्यः, [ भवान् , ] आज्ञापयतु—निर्दिशतु, माम् इति शेषः, आदेशमात्रेणैवाहं तदर्थं यतिष्ये इति हृदयम् । कः—कतमः, नियोगः—निदेशः, [ मया ] अनुष्ठीयताम्—क्रियताम् , इति । भवदाज्ञामात्रमेव तत्कार्यसम्पादनतत्परा भवामीति भावः ।

(२) सूत्रेति । आर्ये !—प्रिये, इयं हि रसभावविशेषदीक्षागुरोः = रसाः—शृ-

(१) नटी—(प्रवेश करके) आर्य ! मैं यह आई, आप आज्ञा दीजिए, मेरे लिए क्या आदेश है?
(२) सूत्रधार—आर्ये ! शृङ्गारादिक नौ रसों तथा भावों के दीक्षागुरु महाराज विक्र-

ङ्गारादयो नव । तथा चाह दर्पणे,—

"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥" इति ।

भावाः—प्रधानतः प्रतीयमाना रसाभिव्यञ्जकाः सञ्चारिभावा देवराजादि-विषयका उद्बुद्धमात्रा रत्यादिस्थायिभावाश्च, तथा चोक्तं दर्पणकारैः—

"सञ्चारिणः प्रधानानि देवादिविषया रतिः ।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते" ॥ इति ।

तेषां विशेषः—प्रकृष्टोभेदः तस्य दीक्षागुरुः—प्रधानोपदेशकः, रसभावविषये विशेषेण दीक्षागुरुरिति वा, तस्य रसभावविशेषदीक्षागुरोः—रसभावविषयेषु प्रधानशिक्षकस्य, विक्रमे—पराक्रमे, आदित्यः–सूर्य इवेति तस्य विक्रमादित्यस्य–'विक्रमादित्य' इति प्रसिद्धाभिधेयस्य नरपतेः, अभिरूपाः—पण्डिता विद्वांस एव भूयिष्ठाः—बहुतरा यस्यां सा विद्वद्बहुलेत्यर्थः, परिषत्—सभा, [ समुपस्थिता-ऽस्तीति शेषः ] । अस्याञ्च—अत्र परिषदि, कालिदासेन—तन्नामकेन केनचिद् विख्यातमहाकविना ग्रथितं—निबद्धं यद् वस्तु—इतिवृत्तं सर्वविषय इति वा यत्र तथोक्तेन, नवेन–नूतनेन, अपूर्वेणेति यावत्, नेतः पूर्वं किमपि सकलरससञ्चारमिश्रितं तादृशं नाटकमासीदिति ध्वन्यते, अभिज्ञानशकुन्तलनामधेयेन—अभिज्ञायते येन तदभिज्ञानं [ अङ्गुरीयकं ] तेन ज्ञाता शकुन्तला यत्र, अथवा अभिज्ञानमिति भावे ल्युट् , तथा च अभिज्ञानं शकुन्तलाया यत्रेति व्युत्पत्तिः, अभिज्ञानशकुन्तलं नाम-धेयम्—अभिख्या, यस्य नाटकस्य तेन [ अत्र अङ्गुरीयकदर्शनद्वारा नायककर्तृकशकु-न्तलापरिणयविषयकावबोधस्य प्रधानवृत्तान्ततयाभिज्ञानशकुन्तलमिति नाटकस्य नामकूटं बोध्यम् ] नाटकेन—दृश्यकाव्यविशेषेण, तथा च दर्पणे—

"नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम्" इति ।

तल्लक्षणमपि तत्रैव—

"नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्" इत्यादि । उपस्थातव्यम्—

---

मादित्य की विद्वानोंसे भरी हुई यह सभा है। सो हमें कालिदासके बनाये हुए 'अभिज्ञानशकुन्तल' नामक नवीन नाटकसे इस सभा की सेवा करनी चाहिए । इसके लिए तुम प्रत्येक पात्रोंको आदर पूर्वक समझा दो।

नटी—सुविदिदप्पओअदाए अज्जस्स ण किम्पि परिहाइस्सदि(१)।
सूत्र—[ सस्मितम् ] आर्य्ये ! कथयामि ते भूतार्थम्(२) ।

( १ ) सुविहितप्रयोगतया आर्य्यस्य न किमपि परिहास्यते ।

आराधनीयम्, नाटकस्यास्याभिनयं विधाय रङ्गस्थान् सभ्यान् सन्तोषयाम इति निष्कृष्टम् ।

तत्—तस्मात्, प्रतिपात्रं—प्रतिकुशीलवम्, एतन्नाटकान्तर्गतप्रत्येकाभिनेतृविषये इत्यर्थः, यत्नः–अभिनयचारुतोत्पादाय विशेषतया आदरः, आधीयताम्–क्रियताम् । [ तेन च सर्वैरभिनेतृभिः स्वस्वकर्म्मणि सावधानैर्भवितव्यमिति भावः] अयमेव त्वां प्रति मे नियोग इति तात्पर्य्यम् ।

(१)नटीति । सुविहितः—सम्यक् सम्पादितः प्रयोगः—अभिनयव्यापारो येन तस्य भावस्तया, एतेनाभिनयप्रशंसाविधानेन रङ्गस्थानां सभ्यानां समुन्मुखीकरणात् प्ररोचनानाम भारतीवृत्तेरङ्गं सन्दर्शितम् । यथा दर्पणे—

'उन्मुखीकारः प्रशंसातः प्ररोचना' इति ।

तथा व्याजेन नटस्य प्रशंसाऽपि सूचितेति बोध्यम् । आर्यस्य—भवतः, किमपि—अभिनये कश्चिदपि प्रयोगः, न परिहायिष्यते—न परिहीणं भविष्यति नः स्खलितं भविष्यतीत्यर्थः । तथा च प्रतिपात्रयत्नाधाने न किञ्चत्प्रयोजनम्, यथा सर्वदा तथैवाद्यापीति भावः ।

(२)सूत्रेति । स्मितम्—'ईषद् हास्यं तेन सहेति सस्मितम्—नटीकृतप्रशंसाया निर्मूलत्वद्योतनाय स्मितकरणमिति बोध्यम् । आर्ये=प्रिये, ते—तव समीपे, भूतार्थम्—सत्यविषयं, "भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः" इति विश्वः, कथयामि—निगदामि ।

उपर्युक्तं युक्त्या समर्थयति—आ परितोषेति । विदुषां—पण्डितानाम्, आपरितोषात्—सन्तोषप्राप्तिपर्य्यन्तम्, यावद्विज्ञाः सन्तोषं न प्राप्स्यन्ति तावत्कालमि-

( १ ) नटी—हमारे सब पात्र काम करनेमें बड़े निपुण हैं, इनके कारण आपका कुछ भी परिहास नहीं होगा ।

( २ ) सूत्रधार—( मुसकराता हुआ ) आर्य ! मैं तुमसे सच कहता हूँ कि—

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ २ ॥

त्यर्थः । प्रयोगविज्ञानम् ,-प्रयोगस्य-आङ्गिक-वाचिक-आहार्य्यसात्त्विकरूपाभिनयचतुष्टयक्रियाकलापस्य विज्ञानम्--विशेषशिक्षाम्, साधु—सम्यगुत्कृष्टमेव स्थितम् , इति तु न मन्ये—न स्वीकरोमीत्यर्थः । कुतः ? इति चेत्, तत्राह—बलवदपीति । शिक्षितानां—विज्ञानाम्, मादृशानामशिक्षितानां कथा तु दूरे तिष्ठत्विति भावः, बलवदपि—सुदृढमपि, चेतः—मनः, आत्मनि-स्वस्मिन् , विषये, अप्रत्ययम्—अविश्वसनीयम् , भवतीति शेषः । लोकेऽस्मिन् वस्तुतः सुशिक्षिता अपि जना मदीयेयं शिक्षा समुत्कृष्टैवेति निश्चेतुं न शक्नुवन्ति, मादृशानां मन्दमतीनां जनानां कथा तु तत्र दूरतः परिहरणीया इति निष्कृष्टार्थः । अत एव सुविहितेत्यादिना त्वया प्रकटितोऽपि विश्वासो न मयि समुचित इति भावः ।

काव्येऽत्र पूर्वार्द्धे—विद्वद्भिरेव निरीक्षणीयं मदीयाभिनयकौशलमिति अन्तर्हिताभिप्रायबलात्—'पर्यायोक्तिरलङ्कारः । यथा चाह दर्पणकारः—

"पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति । भामहोऽपि—
"पर्यायोक्तं प्रकारेण यदन्येनाभिधीयते ।
वाच्यवाचकशक्तिभ्यां शून्येनावगमात्मना ॥" इति ।

परार्द्धे तु-सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासः । तल्लक्षणञ्च—
"सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यं च कारणेनेदं कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा मतः ।" इति ।

अत्र द्वयोरप्यलङ्कारयोरङ्गाङ्गित्वरूपेण साङ्कर्य्यम् । केचित्तु-'अर्थान्तरन्यासोऽयम्-अर्थापत्त्या सङ्कीर्यते, इति वदन्ति । इयमार्या नाम गीतिः । तथा चोक्तम्—
'यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥ इति ।
'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥" इति च ।

नटी—[ सविनयं ] एवं णेदं । अणन्तरकरणिज्जं दाणिं अज्जो आणवेदु(१) ।

(१) एवमेतत् । अनन्तरकरणीयमिदानीम् आर्य्य आज्ञापयतु ।

अत्र गणनियमो यथा—

लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठो जश्च न लघु वा प्रथमार्द्धे नियतमार्य्यायाः ॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥

आर्यायाः पूर्वार्द्धे सप्त गणाः स्युरन्ते तु गुरुवर्ण एकः । तत्र विषमे=प्रथमतृतीयपञ्चमसप्तमरूपे मध्यगुरुगणो न स्यात् । षष्ठो गणो लघुचतुष्टयात्मको मध्यगुरुको वा स्यात् । तत्र षष्ठे नूले लघुचतुष्टयात्मके सति द्वितीयलघुवर्णादारभ्य सयति पदं प्रवर्त्तते । परके सप्तमे लघुचतुष्टयात्मके सति प्रथमलघुवर्णादारभ्य पदप्रवृत्तिः स्यात् । तथा परार्द्धे तु पञ्चमगणे लघुचतुष्टयात्मके सति तत्रापि तस्मात् प्रथमाक्षरादारभ्य पदप्रवृत्तिर्भवति । तथा चान्तिमार्द्धे षष्ठो गण एकलघुवर्णात्मक एव भवति न तु पूर्वार्द्धवत् मध्यगुरुः सर्वलघुर्वा भवतीति तात्पर्यम् ।

गणस्तु चतुर्मात्रात्मकः पञ्चविध एव भवति । तथा चोक्तम्—

"ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु विश्रुताः ॥" इति ।

अस्यार्थः,—सर्वगुरुः–गुरुवर्णद्वयम्, अन्तगुरुः–गुरुवर्णान्तं लघुवर्णद्वयम्, मध्यगुरुः—लघुवर्णद्वयसंकलितो गुरुवर्णः, आदिगुरुः—गुरुवर्णपुर्वकं लघुवर्णद्वयम्, तथा लघुवर्णचतुष्टयात्मको गणो भवतीत्यवधेयम् ॥ २ ॥

( १ ) नटीति । विनयेन सहेति सविनयं—विनयपूर्वकं, विनीतभाव-

जब तक विद्वान् लोग मेरे कौशलसे गद्गद न होजायँ, तब तक मैं अपने नाट्य–कार्यको अच्छा नहीं कह सकता। क्योंकि 'मैं इस कामको कर ही लूँगा' ऐसी बलवती धारणा रहने पर भी शिक्षितोंके सामने स्वयं अपने चित्तको विश्वास नहीं होता ( अर्थात् यह सन्देह बना ही रहता है कि ये लोग इससे सन्तुष्ट होंगे या नहीं ) ॥ २ ॥

( १ ) नटी—( विनयपूर्वक ) आपका कहना ठीक है। अब इसके आगे जो करना हो सो बताइए।

सूत्र—आर्य्ये ! किमन्यदस्याः परिषदः श्रुतिप्रमोदहेतोर्गीतात् करणीयमस्ति(१) ।

नटी—अध कदमं उण उदुं अधिकरिअ गाइस्सं(२) ।

सूत्र—आर्य्ये ! नन्विममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम् । सम्प्रति हि(३) ।

---

( २ ) अथ कतमं पुनः ऋतुम् अधिकृत्य गास्यामि ।

---

मवलम्ब्येति भावः । एतत्—भवदुक्तम्, एवम्—इत्थं, समीचीनमेवेत्यर्थः । [ अनेन नटकथनस्वीकारेण तत्प्रशंसापि सूच्यते ] अनन्तरकरणीयम्–उत्तरकालकर्तव्यम्, परस्तात् यत् कर्त्तव्यं तत्सर्वमित्यर्थः, आर्यः–भवान्, आज्ञापयतु—कथनेनानुमोदयतु ।

( १ ) सूत्रेति । आर्ये–प्रिये, अस्याः—एतत्समुपस्थितायाः, परिषदः–सभायाः, श्रुतिप्रमोदहेतोः—श्रुतेः—श्रवणस्य प्रमोदः–आमोदस्तस्य हेतुः–कारणं तस्मात्, श्रवणसुखसम्पादकात, गीतात्—गानात्, अन्यत्–अपरम्, किं करणीयमस्ति ?—किं विधेयमस्ति ?, अतः गीतमेव आरभ्यतामित्याशयः ।

(२)नटीति । अथेति प्रश्नार्थे । कतमं–षण्णामृतूनां मध्ये कम्, [निर्धारणेऽतमः ] ऋतुमधिकृत्य–आश्रित्य, गास्यामि–गानं विधास्यामि ।

(३)सूत्रेति । आर्ये—प्रिये !, नन्वित्यनुनये, अनुज्ञायां वा, अचिरप्रवृत्तम्–सम्प्रति समुपस्थितम्, [ अचिरेति विशेषणेन कुसुमपल्लवादीनां नूतनतया सौरभसौन्दर्यातिशयो व्यञ्जितः ] उपभोगक्षमं–सेवनार्हं, शीतलमन्दसुगन्धपवनादिसेवनयोग्यमित्यर्थः । [ एतेन अभिनयजनितखेदापनोदः प्रकटितः ] ग्रीष्मसमयमेव–ग्रीष्मर्तुमेव, तावदधिकृत्य–आश्रित्य, ग्रीष्मसमयवर्णनमुखेनेत्यर्थः, गीयतां—

---

( १ ) सूत्रधार—आर्ये ! गानेके सिवाय इस सभाके श्रवणको आनन्द देनेवाला और कौन काम हो सकता है ?

( २ ) नटी—तो फिर किस ऋतुका गाना गाया जाय ?

( ३ ) सूत्रधार—आर्ये ! यह जो अभी विद्यमान है, उसी ग्रीष्म ऋतु का गाना गाओ । क्योंकि इस समय—

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ३ ॥

गानं क्रियताम् । ग्रीष्मप्रवृत्तिं समाश्रित्य गीयतामित्युक्त्वात्तत्प्रवृत्तिं दर्शयति सम्प्रति हीति ।—इदानीन्तु इत्यर्थः, अस्य श्लोकेनान्वयः ।

सुभगेति । स्वतिशयेन भगो बलो येष्वेतादृशाः सलिलावगाहा येषु ते तथोक्ताः, सुभगोऽतिमनोहरः सलिलेषु जलेष्ववगाहो मज्जनं येषु ते इति वा; पाटलानां—पाटलनामधेयकुसुमानां संसर्गेण—स्पर्शेन सुरभिः—सुगन्धिः वनवातः—काननपवनो येषु ते, तथोक्ताः; प्रकृष्टा छाया यत्र तादृशे स्थाने सुलभाः—अनायासलभ्या निद्रा—सुप्तिर्येषु ते तथा ; परिणामे—परिपाके सायंकाले इति यावत्, रमणीया—मनोहराः, सुखविहारायेति भावः, दिवसा, यत्र वर्त्तन्ते इति शेषः । [ एवं सर्वगुणसम्पन्नं ग्रीष्मकालमधिकृत्य गीयतामित्याशयः ] अत्र सविशेषणैः प्रकृते स्वीयश्रमापनोदो ध्वन्यते, अत एव परिकरालङ्कारः । तथा च—

'उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः, ॥ इति ।

ग्रीष्मसमयस्वभाववर्णनात्, स्वभावोक्तिश्च । तथा चाह दण्डी—

"नानावस्थं पदार्थानां रूपं साक्षाद् विवृण्वती ।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्मता ॥" इति ।

केचित्तु—दिवसानां गीतेन वर्णनीयताप्रतिपादनं प्रति सुभगसलिलावगाहत्वादिकारणकलापानां सूपन्यासात् समुच्चयोऽलङ्कार इति वदन्ति ।

"समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके ।
खलेकपोतिकान्यायात् तत्करः स्यात्परोऽपि चेत् ॥
गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये ॥"

इति दर्पणोक्तलक्षणात् । श्रुतिवृत्त्यनुप्रासौ शब्दालङ्कारौ । आर्या जातिः । तल्लक्षणं तु प्रागुक्तम् । ३ ।

जल में स्नान करना अच्छा लगता है । पाटल ( पुष्पविशेष ) से टकरा-टकरा कर वनवायु सुगन्धित हो रही है, जहां कि अच्छी तरह छाया हो, ऐसे स्थान में नींद मजे से आती है और सूर्यास्त के समय का दिन बड़ा सुन्दर मालूम होता है ॥ ३ ॥

नटी—तह । [ इति गायति ] (१) ।

ईषदीषच्चुम्बिआइं भमरेहिं उह सुउमारकेसरसिंहाइं ।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं ॥ ४ ॥

---

( १ ) तथा ।
( ४ ) ईषदीषच्चुम्बितानि भ्रमरैः ऊह सुकुमारकेसरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ।

---

( १ ) नटीति । तथेति स्वीकारोक्तिः, तदेव करोमीत्यर्थः ।

ईषदीषदिति । प्रमदाः—प्रकृष्टो मदो रूपसौभाग्यजनितो विकारविशेषो यासां ताः, मदविह्वलास्तरुण्य इत्यर्थः । मदातिरेकाद् भूषणार्थं पुष्पावचयनमासां प्रसिद्धम् । तथाऽपि दयमानाः—सदयाः सत्यः, सुकुमारकेशरशिखानि—,सुकुमाराः–कोमलाः केशराणां=किञ्जल्कानां शिखा येषां तानि, भ्रमरैः–मधुकरैः, ईषदीषत्–अनिर्भरं यथा स्यात्तथा चुम्बितानि–स्पृष्टानि, एवम्भूतानि शिरीषकुसुमानि=तदाख्यपुष्पाणि, अवतंसयन्ति–कर्णालङ्कारीकुर्वन्ति, इति पश्येति शेषः । ग्रीष्मसमये एव शिरीषकुसुमानां विकसनादियं ग्रीष्मसमयमधिकृत्यैव गानप्रवृत्तिरिति बोध्यम् ।

अत्र सुकुमारकेशरशिखानि कुसुमानि सन्तीति हेतोर्दयमानाः सत्यः प्रमदा अवतंसयन्तीति हेतुहेतुमद्भावात् पदार्थलिङ्गकं काव्यलिङ्गमलङ्कारः ।

तथा चोक्तम्—

'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते' । इति ।

इयमुद्गाथा नाम जातिः । तथा चोक्तं पिङ्गले—

"पुव्वद्धे उत्तद्धे मता तीसत्तत्ति सुभअ संभणिआ ।
सो उग्गाहो वुत्तो पिङ्गलक इदिट्टसट्टिमत्तङ्गो ॥"

---

( १ ) नटी—जो आज्ञा ( गाती है )—

भ्रमरसमूह ने धीरे–धीरे अच्छी तरह जिसका रस पान किया है, ऐसे कोमल केसर युक्त

सूत्र—आर्य्ये ! साधु गीतम् । अहो ! रागापहृतचित्तवृत्तिरालिखित इव विभाति सर्वतो रङ्गः । तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः ?(१)

नटी—णं पढमं ज्जेव अज्जेण आणत्तं अहिण्णाणसउन्तलं णाम अउव्वं णाडअं अहिणीअदु त्ति(२) ।

(२) ननु प्रथममेव आर्य्येण आज्ञप्तम् अभिज्ञानशकुन्तलं नाम अपूर्व्वं नाटकम् अभिनीयतामिति ।

अस्यानुवादस्तु—

पूर्वार्द्धे उत्तरार्द्धे मात्रास्त्रिंशदिति सुभग संभणिताः ।
सा उद्गाथा उक्ता पिङ्गलकविदृष्टषष्टिमात्राङ्गाः ॥ इति ॥ ४ ॥

(१) सूत्रेति । आर्ये–प्रिये, साधु गीतम्–अत्यन्तसमीचीनतया गानं कृतमित्यर्थः । साधुत्वं दर्शयति—अहो इति । अहो ? इत्याश्चर्ये, रङ्गः–रङ्गभूमिः, नाट्यशाला, तत्रस्थलोकगण इति वा, रागेण–गीतस्वरेण, अपहृता–बलादाकृष्य नीता चित्तवृत्तिर्यस्य स तथोक्तः सन् [ बद्ध इति पाठे तु, रागे–गानस्वरे बद्धा–लीना, चित्तवृत्तिर्यस्य स इत्यर्थः ] अत एव सर्वतः—समन्ततः, आलिखितः—चित्रित इव विभाति–प्रकाशते, अत्र इव शब्दस्योत्प्रेक्षाव्यञ्जकतयोत्प्रेक्षालंकारः । तत्–तावत्, कतमं–कम्, प्रयोगम्—अभिनयम् , आश्रित्य–अवलम्ब्य, एनं—रङ्गम् , आराधयामः सन्तोषयामः, वयमिति शेषः ।

(२)नटीति । नन्विति सम्बोधने । प्रथमं–पूर्वम् , आर्य्येण—भवता, आज्ञ-

गुच्छोंवाले सिरीष के फूलों को, मदमाती युवतियां सदयभाव से अपने अपने कर्णफूल बना रही हैं ॥ ४ ॥

( १ ) सूत्रधार—आर्ये ! तुमने बहुत अच्छा गाना गाया । ओह ! तुम्हारे रागने सबका चित्त चुरा लिया है, इस कारण यह नाट्यसभा किसी चित्रकारके लिखित चित्र की तरह दीख रही है । तो इस समय किस अभिनय से हम इस सभा को प्रसन्न करें ?

( २ ) नटी—आप पहले ही कह चुके ह, कि अभिज्ञानशकुन्तलनामक अपूर्व नाटकका अभिनय किया जाय ।

सूत्र—आर्य्ये ! सम्यगनुबोधितोऽस्मि । अस्मिन् क्षणे खलु विस्मृतं मयैतत् । कुतः—(१)

तवाऽस्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा ॥ ५ ॥

इति निष्क्रान्तौ । (२)

---

क्षम्—उपदिष्टम्, 'अभिज्ञानशकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभि' रित्यादिनेति शेषः । किमित्याज्ञप्तमित्याह—अभिज्ञानशकुन्तलमिति । अपूर्वम्—अभिनवम्, चेतोहरमिति यावत् । अभिनीयताम्, अस्माभिरिति शेषः । पुनश्चात्र ते प्रश्ना न सङ्गच्छते इत्यभिप्रायः ।

(१) सूत्रेति । सम्यगनुबोधितः—त्वया सम्यक् स्मारितः । अस्मिन् क्षणे खलु—तव गानक्षण एव । एतत्—'ननेनाभिज्ञानशकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः' इत्यादि वचनम् ।

विस्मरणकारणं निर्वक्ति—तवेति । अतिरंहसा—वेगातिशयशालिना, अत एव हारिणा—हर्त्तुं शीलमस्येति तेन दूरमाकर्षतेत्यर्थः, शारङ्गेण—मृगेण, एषः—वनधावी राजा दुष्मन्त इव, हारिणा—मनोहरिणा, चित्ताकर्षकेणेति यावत्, तव गीतरागेण—गानस्वरेण, प्रसभं—बलात्, हृतः—आसक्तचित्तः, अस्मि । राज पक्षे दूरं प्रच्यावितः । अत्र श्रौती उपमालंकारः । तदुक्तं दर्पणे—

'श्रौती यथेव वा शब्दाविवार्थो वा वतिर्यदि' इति । पथ्यावक्त्रं वृत्तम् । 'युजोर्जेन सरिद्भर्त्तुः पथ्यावक्त्रं प्रकीर्त्तितम्' इति मेदिनी ॥ ५ ॥

(२) इतीति । निष्क्रान्तौ—रङ्गशालातो निर्गतौ नटीनटाविति शेषः ।

---

(१) सूत्रधार—आर्ये ! तुमने अच्छी याद दिलायी । इस समय मैं यह बात भूल ही गया था । क्योंकि—

बड़े वेगसे भागते मृगद्वारा भगाकर दूर पहुँचाये हुए इन राजा दुष्मन्तके समान तुम्हारे मनोहर गानेने हठात् मेरा मन मोह लिया था ॥ ५ ॥

(२) (दोनों चले जाते हैं ) ।

प्रस्तावना ॥ (१)

(१) प्रस्तावनेति । तल्लक्षणं यथाह दर्पणे—'नटी विदूषको वापि पारिपार्श्विक एव वा, सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ।। इति ।

अत्र सादृश्याद् दुष्मन्तप्रवेशरूपकार्य्यान्तरप्रसाधनाद् अवलगिताख्यप्रस्तावना।

"यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥" इति दर्पणोक्तेः ।

इति कवितार्किकवैयाकरणश्रीनंदकिशोरकरयास्केन विरचितोऽभिज्ञानशकुन्तलप्रस्तावनायां किशोरकेलिः ।



प्राप्तिस्थानम्—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस सिटी ।

[ ततः प्रविशति रथारूढः सशरचापहस्तो मृगमनुसरन् राजा सूतश्च(१) ] ।

( १ ) तत इति । शरेण सह वर्त्तत इति सशरं–बाणयुक्तं, चापं–धनुर्हस्ते यस्य स तथोक्तः—धृतधनुर्बाणः, राजा–दुष्मन्तः, सूतः–तत्सारथिश्च, मृगं–कञ्चिद्धरिणम्, अनुसरन्–अनुधावन्, प्रविशति नाट्यशालायामिति भावः । 'सूतः क्षत्ता च सारथिः' इत्यमरः ।

अयं नायको धीरोदात्तः । धीरोदात्तस्याऽस्य संस्कृतं पाठ्यं सूतस्यापि । तदुक्तञ्चादिभरते—

"धीरोद्धते धीरललिते धीरोदात्ते तथैव च ।
धीरप्रशान्ते च तथा पाठ्यं योज्यं च संस्कृतम्" ॥

इति । मातृगुप्ताचार्याश्च—

"संमतानां देवतानां राजन्यामात्यसैनिके ।
वणिङ्मागधसूतानां पाठ्यं योज्यं च संस्कृतम्" ॥

इति । धीरोदात्तस्य लक्षणमुक्तं दर्पणे—

"अविकत्थनक्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः" ॥

इति । तद्गुणास्तूक्ताः सुधाकरे—

"तद्गुणास्तु महाभाग्यमौदार्य्यं स्थैर्यदक्षते ।
औज्ज्वल्यं धार्मिकत्वं च कुलीनत्वं च वाग्मिता ॥
कृतज्ञत्वं नयज्ञत्वं शुचिता मानशीलता ।
तेजस्वित्वं कलावत्त्वं प्रजारञ्जकतादयः" । इति ॥

इत आरभ्य एतदङ्कसमाप्तिं यावन्मुखसन्धिः । तथाचात्र 'वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती' इत्युक्तप्रकारेण राज्ञः शकुन्तलाप्राप्तावौत्सुक्यात् 'कधं इमं जणं पेक्खिअ–' इति वचनेन शकुन्तलायाश्च राजप्राप्तौ औत्सुक्यादारम्भो नामाद्या कार्यावस्थाऽभिहिता । यथोक्तं दर्पणे—

"भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये" इति ॥

(१) (इसके बाद रथ पर सवार हाथ में धनुषबाण लिये राजा दुष्मन्त और सारथि मृग का पीछा करते हुये आते हैं )

सूतः—[ राजानं मृगञ्चावलोक्य ] आयुष्मन् ! (१) ।

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्म्मुके ।

मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम् ॥ ६ ॥

---

तथैवानुसूयाप्रियंवदाभ्यां परिवर्द्धितं शकुन्तलादुष्यन्तयोरन्योन्यप्रेम वीजं नामार्थप्रकृतिः । तथा चोक्तं साहित्यदर्पणे—

"अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।
फलस्य प्रथमो हेतुर्वीजं तदभिधीयते" ॥

तथा—

"यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्" । इति ॥

( १ ) सूत इति । आयुरस्यास्तीति आयुष्मान्, तत्सम्बोधने आयुष्मन् ! प्रशस्तायुःशालिन् ! । सूतस्य संस्कृतभाषणे प्राक् प्रमाणमुपदर्शितम् । "आयुष्मन् रथिनं सूतः" इति दर्पणवचनात् सूतस्य राजानमुद्दिश्य 'आयुष्मन्' इति सम्बोधनं ज्ञेयम् । भरतोऽप्याह—"आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा" इति । सूतलक्षणमुक्तं मात्स्ये—

"निमित्तशकुनज्ञानो हयशिक्षाविशारदः ।
स्वामिभक्तो महोत्साहः सर्वेषां च प्रियंवदः ॥
शूरश्च कृतविद्यश्च सारथिः परिकीर्त्तितः" । इति ।

कृष्णसार इति । कृष्णश्चासौ सारः—शवलश्च कृष्णसारः तस्मिन् कृष्णसारे—पलायमाने मृगविशेषे "वर्णो वर्णेन" समासः । तथा ज्यां—गुणमधिकृत्य वर्त्तत इति अधिज्यं कार्मुकं—धनुर्यस्य तस्मिन्, त्वयि—दुष्यन्ते, चकारेण तुल्यकालता द्योत्यते । चक्षुर्ददत्—अर्पयन्, अहमिति योज्यम् । एकस्य चक्षुषो युगपदनेकत्र वर्त्तमानत्वाद्विशेषालंकारः । मृगमनुसरतीति तं मृगानुसारिणं—मृगरूपधारियज्ञानुसारिणमित्यर्थः, प्रकृते तदनुसारित्वं प्रकरणलभ्यम्, साक्षात्—प्रत्यक्षम्, पिनाकिनं—पिनाकधनुर्धारिणं शिवमिव पश्यामि—अवलोकयामि ।

---

( १ ) सारथि—( राजा तथा मृग को देखकर ) चिरञ्जीविन् !

राजा—कार्य्यज्ञा देवी, कार्य्योपरोधं मे परिहरति (१) ।

प्रती—देव ! अमच्चो विणवेदि अज्ज रज्जकज्जस्स बहुलदाए एक्कं ज्जेव मए पोरकज्जं पच्चवेक्खिदं, तं देवो पत्तारोविदं पच्चक्खीकरेदुत्ति (२) ।

(२) देव ! अमात्यो विज्ञापयति अद्य राज्यकार्य्यस्य बहुलतया एकमेव मया पौरकार्य्यं प्रत्यवेक्षितम्, तत् देवः पत्रारोपितं प्रत्यक्षीकरोतु इति ।

(१) राजेति । कार्य्योपरोधपरिहारेच्छां प्रतिनिवृत्तौ हेतुं दर्शयन् देवीं श्लाघते;—कार्य्यज्ञेति । कार्य्यं—करणीयं जानाति या सा तथाविधा, कार्य्याकार्य्यविवेकवती, कार्य्यगौरवज्ञा कार्य्यावसरज्ञा वेत्यर्थः । हेतुगर्भविशेषणमिदम् । देवी—वल्लभती । अत एव मे—मम, कार्य्योपरोधं—कार्य्यविराधम्, कार्य्यविघ्नमिति यावत्, परिहरति—परित्यजति । राजकार्य्यविघ्नजननमकार्य्यमिति मत्वा निवर्त्तितेत्यर्थः । अयमाशयः;—

पत्रहस्तां प्रतीहारीमवलोक्येयं राजान्तिकमेव गच्छति तत्र किञ्चिद्राज्यसम्बन्धि कार्य्यमस्ति एवञ्चेदानीं ममोपस्थितौ तु कार्य्ये विघ्नसम्भावना स्यादिति मत्वा देवी प्रतिनिवृत्तेति बोध्यम् ।

(२) प्रतीति । अथ पौरकार्य्यराज्यकार्य्ययोर्नृपामात्याभ्यां विभागेन प्रत्यवेक्षणीयत्वेऽपि राज्ञो विमनस्कतया "वेत्रवति ! मद्वचनादमात्यपिशुनं ब्रूहि अद्य चिरप्रबोधान्न सम्भावितमस्माभिर्धर्म्मासनमध्यासितुम्; यत् प्रत्यवेक्षितमार्य्येण पौरकार्य्यं तत् पत्रमारोप्य प्रस्थाप्यतामिति" पूर्वोक्त्या तद्दिने पौरकार्य्यवेक्षणभारस्यापि मन्त्र्युपरि विन्यस्ततया तत्राह;—अद्येति । "अमात्यो विज्ञापयति" इत्यस्य वक्ष्यमाणं "प्रत्यक्षीकरोतु इति" एतद्वाक्यं कर्म्म । अद्य—अवदनु-

(१) राजा—महारानी कार्य को समझती हैं, इसी कारण मेरे काम में बाधा डालने से दूर रहती हैं ।

(२) प्रतीहारी—देव ! मन्त्री जी कहते हैं-आज राज-कार्य ज्यादा था, इस कारण केवल एक ही पौरकार्य देख सका हूँ । उसे इस पत्र में लिख दिया है । श्रीमान् देख लें ।

राजा—इतः पत्रं दर्शय (१) ।

प्रती—[ उपनयति ] (२) ।

राजा—[ वाचयति ] विदितमस्तु देवपादानाम्, धनवृद्धिर्नाम वणिक् वारिपथोपजीवी नौव्यसनेन विपन्नः, स चानपत्यः, तस्य चानेककोटिसंख्यं वसु, तदिदानीं राजस्वतामापद्यते इति श्रुत्वा देवः प्रमाणम् इति (३) ।

---

परस्थितिदिवसे, राज्यकार्य्यस्य—नियमेन मम प्रत्यवेक्षणीयस्य राज्यरक्षणहेतुभूतसामादिकार्य्यस्य, बहुलतया—अधिकतया, एकमेव—तदधिकप्रत्यवेक्षणानवसरत्वादेकमात्रम्, पौरकार्य्यं—भवत्प्रत्यवेक्षणीयं पुरवासिनां कार्य्यम् । वक्ष्यमाणसार्थवाहवृत्तान्तस्य प्रकृतिकार्य्यतया राज्यकार्य्यत्वेऽपि तस्य सार्थवाहस्य स्वपुरवासित्वेन तद्घटितकार्य्यस्य पौरकार्य्यत्वमेवेति मन्तव्यम् । पत्रारोपितं—पत्रे लिखितम्, प्रत्यक्षीकरोतु—विलोकयतु । विभावयत्वित्यर्थः ।

( १ ) राजेति । इतः—ममान्तिके इत्यर्थः ।

( २ ) प्रतीति । उपनयति—राज्ञो हस्ते पत्रमर्पयतीत्यर्थः ।

( ३ ) राजेति । वाचयति—पठति । पत्रलिखितमिति शेषः । तदेवाह;—विदितमित्यादि । देवपादानां—नरपतिचरणानाम्, अत्र पादशब्देन देवपदवाच्यस्य राज्ञो भक्त्यतिशययोग्यत्वं बहुवचनेन च गौरवाधिक्यं ध्वन्यते, विदितमस्तु—ज्ञातमस्तु, अत्र वर्त्तमाने क्तप्रत्ययात्त कर्त्तरि षष्ठी । वारिणः पन्था इति वारिपथः "ऋक्पूरब्धूःपथाम्" ( पा० ) इति समासान्तोऽच्प्रत्ययः; तेन उपजीवतीति वारिपथोपजीवी—समुद्रादिजलपथे वाणिज्यार्थं नौकापरिचालनेन जीविकानिर्वाही

---

( १ ) राजा—इधर आकर पत्र दिखाओ ।

( २ ) प्रतीहारी—(लाता है )

( ३ ) राजा—(पढ़ता है ) महाराज को मालूम हो कि जलपथोपजीवी कोई एक धनवृद्धि नाम का बनिया नौका डूब जाने के कारण मर गया है । उसके कोई सन्तान नहीं है और उसके पास कई करोड़ का धन है । वह धन अब से राजसम्पत्ति माना जारहा है, यह सुन कर आप कर्तव्य का निश्चय करें ।

[ सविषादम् । ] कष्टं खल्वनपत्यता । वेत्रवति ! महाधनतया बहुपत्नीकेनानेन भवितव्यम् , तदन्विष्यतां यदि काचिदापन्नसत्त्वास्य भार्य्या स्यात् (१) ।

त्यर्थः, वणिक्—पण्याजीवः, "वाणिजो वणिक् । पण्याजीव" इत्यमरः, नौव्यसनेन;—नावः—नौकायाः व्यसनं—विपत् जलमज्जनमिति यावत् तेन, "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः, विपन्नः—मृतः । सः—वणिक् च, अनपत्यः—निःसन्तानः, न पतति वंशो येन जातेन तदपत्यं तस्माद् वञ्चित इत्यर्थः । तस्य—वणिजश्च, अनेककोटिसंख्यम् ;—अनेकाः—बह्वः कोटयः संख्या यस्य तत् तादृशम् , वसु—धनम् , अस्तीति शेषः, "रिक्थमृक्थं धनं वसु" इत्यमरः । तत्—वसु इदानीं—धनवृद्धेर्देहान्तात् परम् , राजस्वतां—राजस्वामिकताम् , आपद्यते—प्राप्नोति ।

अत्राह मनुर्भगवान् ;—

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ।
तदभावे सकुल्यः स्यादाचार्य्यं शिष्य एव वा ॥
सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्ता एवं धर्म्मो न हीयते ॥
अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः ॥
इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृपः ॥ इति ।

तथा च धनवृद्धेः शूद्रतया चार्य्यशिष्ययोरसम्भवेन त्रैविद्यब्राह्मणाधिकारस्य च ब्राह्मणधनगोचरत्वस्य पारिशेषिकत्वेन तद्धने राज्ञ एवाधिकार इति स्मृतिसिद्धान्तादिति भावः । इति श्रुत्वा—श्रवणविषयीकृत्य, देवः—भवान् राजा, प्रमाणं—कर्तव्यतानिश्चयकृत्; "प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृषु" इत्यमरः, तद्धनं किं भवत्स्वामिकत्वेन कोषागारमानेष्यामोऽथवाऽन्यथा किञ्चित् कुर्म्म इति देवो निर्द्धारयत्वित्यर्थः । इति देवपादानां विदितमस्त्विति योजना ।

( १ ) सःविषादमिति । सखेदमित्यर्थः । अथ राजा धनवृद्धेरनपत्यतया

( १ ) ( विषाद के साथ । सन्तान का न होना भी बड़े कष्ट का विषय है । वेत्रवति ! वह बड़ा धनाढ्य था, इस कारण उसके बहुत सी स्त्रियां होंगी । इस लिये अनुसंधान करो, यदि उस की कोई पत्नी गर्भवती हो तो—

प्रती—दाणिं ज्जेव साकेदउरस्स सेट्ठिणो दुहिदा णिव्वुत्तपुंसवणा तस्स जाआ सुणीअदि (१)।

(१) इदानीमेव साकेतपुरस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना तस्य जाया श्रूयते।

सह तामवस्थां विचिन्तयन् जातस्वानपत्यतास्मृतिः सविषादमाह;—कष्टमिति। कष्टं—दुःखम्, कार्यकारणयोरभेदोपचयात् कष्टकारणमित्यर्थः। अनपत्यता सर्वेषां हि दुःखातिशयकारिणीति तात्पर्य्यम्। वेत्रवतीति प्रतीहार्य्याः सम्बोधनम्। महाधनतया—बहुधनतया कोटीश्वरत्वेनेति यावत्, अनेन—धनवृद्धिना, बहुपत्नीकेन; बह्व्यः—अनेकाः पत्न्यः भार्य्याः यस्य तेन "नद्यृतश्च" इति ( पा० ) कप् प्रत्ययः पुंवद्भावश्च, भवितव्यमिति भावे तव्यप्रत्ययः। तत्—तस्मात्। अस्य—धनवृद्धेः, काचित् भार्य्या, आपन्नम्—उदरे प्राप्तं सत्त्वं—जन्तुर्यया सा आपन्नसत्त्वा—गर्भिणी स्यात्, "आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः। तदा तद्धनस्य राजस्वत्वाभावेनास्माभिरग्राह्यत्वमेव तस्याः पुत्रप्रसवस्य सम्भवे तद्धनस्य पुत्रेणैव प्राप्यत्वात् तत्र लोभवशेनास्माभिस्तद्ग्रहणे वृत्तिलोपेनास्माकं गुरुतरपापसम्भवात्। तथा च कृतयुगे मानवधर्म्मस्यैव धर्म्मे प्रमाणतया मनुना च दायाधिकारक्रमे पत्न्यधिकारत्वस्य नाभिहितत्वात् तस्य भार्य्यासद्भावेन गर्भान्वेषणं राज्ञा कृतम्, पूर्वं तु मन्त्रिणा तदनुसन्धानमकृत्वैव तद्धने नृपस्वामिकत्वं निरूपितमिति सर्वमनवद्यम्।

ननु सत्ये मानवधर्म्मस्यैव कथं धर्म्मे प्रमाणत्वम्;

तत्राहः;—

"कृते तु मानवो धर्म्मस्त्रेतायां गौतमः स्मृतः।
द्वापरे शाङ्खलिखितः कलौ पाराशरः स्मृतः॥" इति।

गर्भसत्त्वस्य धनाधिकारे व्यवस्थामाह मनुः;—

"ये जाता येऽप्यजाता वा ये च गर्भे व्यवस्थिताः।
वृत्तिं तेऽपि हि काङ्क्षन्ति वृत्तिलोपो विगर्हितः॥" इति।

( १ ) प्रतीति। साकेतपुरस्य—अयोध्यायाः "स्यात्साकेतोऽयोध्यायाम्"

( १ ) प्रतीहारी—मैंने अभी सुना है कि साकेतपुर के किसी बनिये की पुत्री, उस धनवृद्धिकी पत्नी है, उसका पुंसवनसंस्कार भी हो चुका है।

राजा—स खलु गर्भः पित्र्यमृक्थमर्हति । गत्वैवममात्यं ब्रूहि (१)

प्रती—जं देवो आणवेदि [इति प्रस्थिता] (२) ।

राजा—एहि तावत् (३) ।

प्रती—[प्रतिनिवृत्य] एसाह्मि (४) ।

(२) यत् देव आज्ञापयति ।

(४) एषास्मि ।

इति हैमः, श्रेष्ठिनः—वणिजः । निर्वृत्तं—निष्पन्नं पुंसवनं—द्वितीयसंस्कारः; तृतीयमासकर्त्तव्यपुंसन्तानसम्पादकसंस्कारविशेषो यस्याः सा तादृशी, पुंसवनसंस्कारस्य 'गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा' इति याज्ञवल्क्येन 'चतुर्थे स्पन्दते ततः' इत्युक्तस्पन्दनमासपूर्वत्वेन तृतीयमासकर्त्तव्यतयोपदेशाद्दर्शयितगर्भत्वं दर्शितम् । अथवा पुंसवनसंस्कारेण गर्भस्य पुत्रीकरणश्रुतेरिदमुक्तम् । तस्य—धनवृद्धेः । श्रूयते—लोकपरम्परयेति शेषः । अस्य तु वृत्तान्तस्यामात्यपिशुनेनाज्ञातत्वादेव तद्धनस्य राजगामित्वेन सम्पद्यत इति तेनोक्तमतो नैष शास्त्रानभिज्ञ इति सुधीभिर्विभाव्यम् ।

(१) राजेति । स खलु—स एव, गर्भः—उदरस्थः सन्तानः, पित्र्यं—पैतृकम् , यत् प्रत्ययः, ऋक्थं—धनम् , "ऋक्थम्रिक्थं धनं वसु" इत्यमरः, अर्हति—प्राप्तुं योग्यो भवति । न तु नृपतिरित्यभिप्रायः । तथा च गौतमः;—"उत्पत्त्यैवार्थं स्वामित्वाल्लभेत" इति ।

(२) प्रतीति । यद्देव आज्ञापयति तदेव गत्वा निवेदयामीति तात्पर्याशयः ।

(३) राजेति । एहीति प्रतीहारीमाह्वयति । एहि—प्रतिनिवर्त्तस्व, किञ्चित् श्रुत्वा पश्चाद्गन्तव्यमित्यशयः ।

(४) प्रतीति । प्रतिनिवृत्य—पुनरेत्य । एषास्मि प्रतिनिवृत्तेति शेषः ।

(१) राजा—वह गर्भ अपने पिता के धन का अधिकारी है, ऐसा अमात्य से जाकर कह दो।

(२) प्रतीहारी—महाराज की जो आज्ञा। ( जाने लगता है )

(३) राजा—यहाँ आओ ।

(४) प्रतीहारी—( लौटकर ) आया।

राजा—किमनेन सन्ततिरस्ति नास्तीति (१) ।
येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्मन्त इति घुष्यताम् ॥ २५ ॥

(१) राजेति । सन्ततिः—धनवृद्धेः सन्तानः । सन्ततिरस्तु वा मास्तु वा तद्विचारो मास्त्विति भावः ।

तर्हि किं कर्त्तव्यमित्यत आह;—येनेति । प्रजाः—राज्यस्था जनाः "प्रजा स्यात् सन्ततौ जने" इत्यमरः, येन येन स्निग्धेन—स्नेहवता, "स्निग्धं स्नेहयुते चिक्कणेऽपि स्यात्" इति मेदिनी, बन्धुना—पुत्रादिबान्धवजनेन, वियुज्यन्ते—विरह्यन्ते नियतिवशाद् वियुक्ता भवन्तीत्यर्थः । पापादृते—पापं विना असति पापे इत्यर्थः, अथ वा पापिनं विना; स्त्रीणां भर्तृत्वेन विना वेत्यर्थः 'अन्याराद्दितरर्त्ते' इति ( पा० ) ऋतेशब्दयोगे पापशब्दात् पञ्चमी, तासां—प्रजानाम् , स सः—बन्धुः, दुष्मन्तः, इति घुष्यतां—सर्वत्र राज्ये भेरीप्रहारपूर्वकमावेद्यताम् । "उच्चैर्घुष्टं तु घोषणम्" इत्यमरः ।

तथा च धनवृद्धेः स्थितायामपि सन्ततौ सम्प्रति तदर्थजातं मदधीनमेव तिष्ठतु यथान्यः कोऽपि तन्नापहर्त्तुं शक्नुयात् परिशेषे तु तदपत्यमेव प्राप्स्यतीति भावः ।

यथाह भगवान् मनुः;—

"बालदायादिकं रिक्थं तावद्राजानुपालयेत् ।
यावत् स स्यात् समावृत्तो यावच्चातीतशैशवः ॥" इति ।

अत्र साहाय्यं नाम नाट्यालंकार उपन्यस्तः । तदुक्तं दर्पणे—

"साहाय्यं सङ्कटे यत्स्यादानुकूल्यं परस्य च" इति ।

अत्र च नायकगत उत्कर्षातिशयो व्यज्यते । तथा दुष्मन्तस्य तेन तेन बन्धुना सहाभेदाध्यवसानाद्रूपकालंकारोऽपि ।

पथ्यावक्त्रं वृत्तम् ॥ २५ ॥

(१) राजा—उसके सन्तान है या नहीं, इस बात का अनुसंधान करनेकी क्या आवश्यकता ?—

हमारे राज्य की जितनी भी प्रजा है, उस में जो लोग अपने किसी भी बन्धु से वियुक्त हों तो पापियों के सिवाय और सब लोगों के बन्धु दुष्मन्त हैं । ऐसी घोषणा करदो ॥२५॥

प्रती—एदं णाम घोषइदव्वं । [इति निष्क्रम्य पुनः प्रविश्य] देव ! काले पविट्ठं विअ अहिणन्दिदं देवस्स सासणं महाजणेण (१) ।

राजा—[दीर्घमुष्णञ्च निःश्वस्य] एवं भोः ! सन्ततिविच्छेदनिरवलम्बना मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ते; ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः (२) ।

(१) एतत् नाम घोषयितव्यम् । देव ! काले प्रवृष्टमिव अभिनन्दितं देवस्य शासनं महाजनेन ।

(१) प्रतीति । एवं—भवदुक्तप्रकारेण घोषयितव्यं—भेरीप्रहारपूर्वकमावेदयितव्यम्, नामेत्यभ्युपगमे, इत्यङ्गीकरोमीत्यर्थः । "नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः । इति उक्त्वेति शेषः, निष्क्रम्य घोषणार्थमिति शेषः, प्रविश्य तन्निवेदनार्थमिति शेषः । देवस्य—महाराजस्य भवतः शासनम्—आज्ञाम्, काले—यथासमये अपेक्षितसमये इति यावत्, प्रवृष्टं—प्रकृष्टवर्षणमिव, अभिनन्दितं—प्रशस्य स्वीकृतम्, तथाविधशासनस्यात्यन्तहितोत्पादकत्वादिति भावः । अत्र प्रतीहार्य्याः पुनः प्रवेशपर्य्यन्तं राज्ञो व्यापारान्तरावर्णनेन राजानपत्यतामेव ध्यायन् स्थित इति प्रकाश्यते । अत्रोपमालङ्कारः ।

(२) राजेति । प्रतीहारीवचनेन च तद्ध्यानात् किञ्चिन्निवृत्तोऽपि पुनस्तस्यैव वणिग्वृत्तान्तस्य पर्य्यालोचनया स्वानपत्यतामनुस्मृत्य सविषादमाह;—एवं भो इति । भो इति विषादसूचकमव्ययम्, "भोस्तु सम्बोधनविषादयोः" इति मेदिनी, भो इत्यलक्ष्यामन्त्रणं प्रतीहारीसम्बोधनं वेति केचित् । सम्पदः—विभवाः, मूलपुरुषस्य—अर्जयितुर्वंशधरस्य, अवसाने—अन्ते—अभावे नाशे इत्यर्थः, सन्ततेः—अपत्यस्य विच्छेदेन—विलोपेन निरालम्बनाः—निराश्रयाः अस्वामिकाः

(१) प्रतीहारी—हां, यही घोषित करना है। (यह कह कर चला जाता है और फिर वापस आकर कहता है) समय पर वृष्टि होने के समान समझ कर राज्य के सभी प्रधान प्रशंसा पूर्वक आपकी घोषणावाणी ग्रहण करते हैं।

(२) राजा—(लंबी और गरम श्वास लेकर) हाय ! सन्तान के अभाव में आश्रयविहीन मेरी सम्पत्ति की भी तो यही दशा होगी।

प्रती—पड़िहदं अमङ्गलं (१) ।

राजा—धिङ्मामुपनतश्रेयोऽवमानिनम् (२) ।

( १ ) प्रतिहतममङ्गलम् ।

सत्यः, एवम्—इत्थम्, धनवृद्धिसम्पद इवेत्यर्थः, यथा धनवृद्धेरुपरमात् तत्सम्पदो राजानमुपस्थातुमुद्यतास्तथेति भावः, परं—तदितरं जनम्, उपतिष्ठन्ते—उपगच्छन्ति, अत्र "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" इति वार्त्तिकसूत्रेण सङ्गतिकरणार्थत्वादात्मनेपदम् । तथा हि, ममापि—अनपत्यस्य दुष्मन्तस्यापि, अन्ते—अवसाने, पुरुवंशश्रियः—पौरवलक्ष्म्याः, एष वृत्तान्तः—ईदृगेव प्रकारः स्यादिति शेषः, "वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्त्तयोः" इत्यमरः ।

क्वचित् पुस्तके "एवं भोः सन्ततिविच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ति । ममाऽप्यन्ते पुरुवंशश्रीरकाले इवोप्तबीजा भूरेवं वृत्ता" इति पाठान्तरम् । अथ व्याख्या;—

भो इति चिन्तायाम् । दीर्घनिःश्वासादयस्तदनुभावाः । मूलपुरुषावसाने—कारणपुरुषान्ते । उपतिष्ठन्ति—प्राप्नुवन्ति । उक्तमर्थमात्मनि योजयन्नाह;—ममापीति । पुरुवंशश्रीरित्यनेन वंशवैशिष्ट्यं द्योतयता तच्छ्रियः परोपस्थानस्यातिशोच्यत्वं सूच्यते । अकाले—अनपेक्षितसमये, उप्तबीजा—प्रोथितशस्या, भूः—भूमिरिव, एवम्—इत्थम् । वृत्ता—संवृत्ता । अत्र चोपमालङ्कारः ।

( १ ) प्रतीति । अमङ्गलं—भवदाशङ्कितं निजावसानरूपं सन्ततिविच्छेदरूपं पौरवश्रियः पराश्रयणं चेति सर्वमशुभम्, प्रतिहतं—देवताप्रसादात् निराकृतं भवत्विति शेषः ।

( २ ) राजेति । अथात्र राजाऽऽत्मानमेवापराधिनं मन्यमानः सनिर्वेदमाह;—धिगिति । श्रेयःपदेनात्रापन्नसत्त्वा शकुन्तला विवक्षिता । उपनतश्रेयोऽवमानिनम्;—उपनतं—स्वयमेवोपस्थितं श्रेयः—ससत्त्वशकुन्तलारूपं कल्याणम्

( १ ) प्रतीहारी—ईश्वर इस अमंगल का निवारण करे ।

( २ ) राजा—मंगल तो स्वयं आकर उपस्थित हुआ था, पर मैंने उसकी अवज्ञा कर के त्याग दिया । मुझे धिक्कार है ।

मिश्र—असंसअं पिअसहीं ज्जेव हिअए कदुअ णिन्दिदो अणेण अप्पा (१)।

राजा—संरोपितेऽप्यात्मनि धर्म्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥ २६ ॥ (२)।

(१) असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितः अनेनात्मा ।

अवमन्यते—प्रत्याख्यानादिना तिरस्करोतीति तं तादृशम्, माम्, धिक्—निन्दामीत्यर्थः "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः । धिग्योगे द्वितीया ।

(१) मिश्रेति । प्रियसखीं—शकुन्तलामेव, हृदये कृत्वा—अभिसन्धाय स्मृत्वेति यावत्, अनेन—राज्ञा दुष्मन्तेन, आत्मा निन्दितः—तिरस्कृत इति योजना । असंशयमिति अस्मिन्नर्थे संशयो नास्तीत्यर्थः । अभावार्थेऽव्ययीभावः । राजोक्तार्थानुवादप्रायमेतत् ।

(२) राजेति । अथोपस्थितश्रेयोऽवमानित्वमेव दुःखातिशयेन विशदीकुर्वन्नाह—संरोपित इति । काले—योग्यसमये, उप्तं—रोपितं बीजं यस्याः सा तथाभूता कृतबीजवपनेत्यर्थः, अत एव महते—विपुलाय फलाय—धान्यादिशस्याय, तदुत्पत्तये इत्यर्थः, "क्लृपि सम्पद्यमाने च" इति ( वा० ) चतुर्थी, कल्पिष्यमाणा—प्रभविष्यन्ती प्रभूतं शस्यं जनयितुं शक्ष्यन्तीत्यर्थः, वसुन्धरा—भूमिरिव, वसुन्धरेत्यन्वर्थं वैशिष्ट्यं द्योतयति, मया—तादृशधार्मिकेण तादृशसावधानेन च, कुलस्य—स्ववंशस्य प्रतिष्ठा—स्थितिहेतुभूता; तद्रक्षसन्तानधारणादाश्रयस्वरूपेति यावत्, धर्म्मपत्नी—धर्म्मानुसारेण परिगृहीता स्त्री शकुन्तला, आत्मनि—स्वस्मिन्, संरोपिते—"आत्मा वै जायते पुत्रः" "आत्मा प्रविश्य जायायां पुत्ररूपेण जायते" इत्यादिश्रुतिस्मृतिभ्यां गर्भरूपेण तदुदरे आहितेऽपि, बीजे निषिक्तेऽपी-

(१) मिश्र०—इस में सन्देह नहीं कि मेरी प्रियसखी को ही सोच कर इन्हों ने अपनी निन्दा की है ।

(२) राजा—कोई ठीक समय पर इसलिये बीजारोप करदे कि भविष्य में विशेष फल

मिश्र—अपरिच्चत्ता दाणिं दे भवस्सदि (१)।

चेटी—[जनान्तिकम्] अज्जे ! एदं पत्तं पेसअन्तेण किं विआरिदं अमच्चेण । पेक्ख दाव भट्टिणो बाहजलप्पवाहो संवुत्तो । अधवा ण एसो सोअं वुद्धिपुव्वअं पड़िवज्जिस्सदि ता मेहच्छण्णागारट्ठिदं णि-

(१) अपरित्यक्ता इदानीं ते भविष्यति ।

त्यर्थः, त्यक्ता—अवधीरिता, नामेति कुत्सायाम्, एतन्मया निन्दितमाचरितमित्यर्थः, अत एव धिङ् मामिति भावः । "नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः ।

अत्र 'वसुन्धरे'ति विशेष्यवाचकपदेनान्वर्थवशादुपमेयभूतायामपि शकुन्तलायां सादृश्यसम्बन्धेन रत्नोपमविनयौदार्य्यधैर्य्यसौन्दर्य्यादिरमणीललामगुणगणप्राचुर्य्यं ध्वन्यते; ध्वन्यते चात्र शकुन्तलागर्भसंस्थितोऽनुपमवस्तुप्रतिमोऽर्भक इति ।

अत्र च धर्म्मपत्नीपरित्यागः कृत इत्येव नापराधः, सन्ततिविच्छेदस्याप्यहमेव हेतुरिति शोकातिशयोऽत्र निर्वेदाद्युपस्कृतो गम्यते ।

किञ्च 'कुलप्रतिष्ठा' 'धर्म्मपत्नी' इति विशेषणद्वयेन सर्वथा तत्त्यागानर्हत्वमिति सूच्यते ।

इह च काले उप्तबीजत्वेनैव महते फलाय कल्पिष्यमाणा भवतीति हेतुहेतुमद्भावात् पदार्थहेतुकं काव्यलिङ्गम् । समुदाये तु श्रौतोपमालङ्कारः । उपजातिर्वृत्तम् ॥ २६ ॥

(१) मिश्रेति । शकुन्तलायाः स्वसमीपावस्थितं राज्ञश्चेदृशानुरागमपि विभाव्योभयोः सङ्गमनमवश्यमेव मत्सूत्रेण भविष्यतीत्यवधारयन्त्याह;—अपरित्यक्तेति । इदानीं—प्रत्यक्षेण मया तवेदृश्या दशाया दर्शनादेतदव्यवहितकाले एवेत्यर्थः, अपरित्यक्ता—पुनर्लब्धेत्यर्थः शकुन्तलेति शेषः । तथा च मत्सकाशात्ते गाढानुरागमाकर्ण्य शकुन्तला पुनरवश्यं त्वत्समोपमागमिष्यत्येवेति भावः ।

मिलेंगे । ऐसा करके जिस तरह वह व्यक्ति उक्त आशान्विता वसुन्धरा को त्याग दे, उसी तरह यद्यपि मैंने उस में पुत्र रूप वृक्ष का रोपण कर दिया था । फिरभी मैंने अपनी आशारूपिणी पत्नी को त्याग दिया है ॥ २६ ॥

(१) मिश्र०— अब से तुम्हारे लिये वह परित्यक्ता नहीं रहेगी ।

व्वाणसमत्थं अज्जमाहव्वं गेण्हिअ आअच्छ (१) ।

(१) आर्य्ये ! एतत् पत्रं प्रेषयता किं विचारितममात्येन । प्रेक्षस्व तावत् भर्त्तुर्वाष्पजलप्रवाहः संवृत्तः । अथवा नैष शोकं बुद्धिपूर्वकं परिवर्जयिष्यति, तन्मेघाच्छन्नागारस्थितं निर्वाणसमर्थम् आर्य्यमाधव्यं गृहीत्वा आगच्छ ।

(१) चेटीति । आर्य्ये इति प्रतीहार्य्याः सम्बोधनम् । तस्याश्चोच्चपदस्थतया गौरवितत्वाच्चेट्या आर्य्यपदप्रयोगेन सम्बोधनं कृतमिति बोध्यम् । पत्रं—धनवृद्धिवृत्तान्तोल्लिखितं पत्रम्, प्रेषयता—राज्ञोऽन्तिकं प्रेरयता, अमात्येन—मन्त्रिणा पिशुनेन, किं विचारितं—कुत्सितं विवेचनं कृतम् "किं कुत्सायां वितर्के च" इति मेदिनी । तादृशं पत्रं प्रेषयता मन्त्रिणा न साधु विवेचनं कृतमित्याशयः । तत्कारणमाह;—प्रेक्षस्वेत्यादि । प्रेक्षस्व—पश्य । भर्त्तुः—राज्ञः, वाष्पजलप्रवाहः—अश्रुप्रवृत्तिः "प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणि" इति मेदिनी, केचित्तु "वाष्पजलप्रवाहः—नयनजलस्रोतः" इति व्याकुर्वन्ति, तन्मन्दम्; तथात्वे धैर्य्यच्युतिप्रसङ्गेन धीरोदात्तत्वहानिः स्यात् । नन्वत्र वाष्पपदेनैव नयनजलरूपार्थलाभात् पुनर्जलपदोपादानेऽर्थगतपौनरुक्त्यं स्यादिति चेन्न; धनुर्ज्यादिपदवत्तद्धारणसम्भवात् । अथ शोकस्योपस्थितौ तु तद्वारणे यत्नः कार्य्यः मन्त्रिनिन्दाकरणे तु न किञ्चित् फलमिति पूर्वोक्तमाक्षिप्याह;—अथवेति । अनन्तरञ्चेत्यर्थः । एषः—राजा, बुद्धिपूर्वकं—स्वबुद्ध्येति तात्पर्य्यम्, आत्मविवेचनयेति यावत्, शोकं न परिवर्जयिष्यति—न परित्यक्ष्यति । निर्वाणसमर्थं—शोकापनोदनक्षमम्, अत्र निर्वाणपदोपादानात् शोकस्यानलरूपत्वं व्यज्यते, तन्मेघाच्छन्नागारस्थितं—मेघाच्छन्ननामकप्रासादोपरिस्थितभवनगतम्, आर्य्यमाधव्यं—विदूषकं माधव्यमिश्रम् ।

(१) चेटी—( प्रतिहारी से चुपके-चुपके ) आर्य्ये ! इस पत्रको भेज कर अमात्यने बड़ी नादानी की । देखो, महाराज के आंसू बहने लगे । अथवा— ये महाराज अपनी जानकारी में उस शोक को त्यागेंगे नहीं । इस लिए मेघच्छन्न नामके बँगले में बैठे हुए आर्य माधव्य को बुला लाओ । वे ही इस शोकानल को बुझाने में समर्थ होंगे ।

प्रती—सुट्ठु दे भणिदं । [इति निष्क्रान्ता] (१) ।

राजा—अहो ! दुष्मन्तस्य संशयमारूढाः पिण्डभाजः (२) ।

कुतः—

अस्मात् परं बत यथाश्रुति सम्भृतानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं पितरः पिबन्ति ॥ २७ ॥

( १ ) सुष्ठु त्वया भणितम् !

( १ ) प्रतीति । सुष्ठु त्वया भणितं—साधु त्वयोक्तम् । इति निष्क्रान्ता—नाध्यन्यान्तिकं प्रस्थिता, प्रतीहारीति शेषः ।

( २ ) राजेति । अथानपत्यता न केवलमैहिकस्य श्रेयसो विघातिनी पारत्रिकस्यापीति सातिशयमनुशोचति;—अहो इति । अहो इति शोके । दुष्मन्तस्य—मम, आत्मनामोच्चारणेन स्वस्य निन्दितत्वं प्रकाश्यते, तेन समुन्नतश्रेयोऽवमानिनो निन्दितस्येत्यर्थः । पिण्डं—श्राद्धीयमन्नं भजन्ते—अर्हन्तीति पिण्डभाजः—पितरः, संशयमारूढाः—पिण्डं लप्स्यन्ते वा नेति सन्देहापन्नाः; अग्रे पिण्डदाभावात् इति भावः।

अथ पितॄणामवस्थां सम्भावयन्नाह;—अस्मादिति । अस्मात्—दुष्मन्तात् , परम्—अनन्तरम् , दुष्मन्तावसाने इत्यर्थः, नः—अस्माकं, कुले—वंशे, पुरवंशे इत्यर्थः । कः—जनः, श्रुति—वेदमनतिक्रम्येति यथाश्रुति—वेदोक्तविधानेनेत्यर्थः, अनतिक्रमार्थेऽव्ययीभावः, सम्भृतानि—सम्यगायोजितानि, संहतानीति पाठे;—सम्प्रयुक्तानीत्यर्थः, निवपनानि—पितृदानरूपाणि पिण्डश्राद्धतर्पणादीनि "पितृदानं निवापः स्या"दित्यमरः, करिष्यति, इति—एवं चिन्तयित्वेति

( १ ) प्रती—तुमने ठीक कहा । ( चली जाती है ) ।

( २ राजा—हाय ! दुष्मन्त के पिण्डभागी पितर व सन्देह में पड़ गये क्यों कि—दुष्मन्त के बाद हमारे वंश में कौन व्यक्ति ऐसा होगा, जो शास्त्रानुसार संगृहीत श्राद्ध और पिण्डदान करेगा । इसी बात को सोच कर हमारे पितर मुझ सन्तानहीन प्राणी

मिश्र—हद्धी हद्धी ! सहि क्खु दीवे ववधाणदोसेण अन्धआर

शेषः, पितरः—मम पूर्वपुरुषाः, प्रसूत्या—सन्तत्या विकलेन—रहितेन तनयहीनेनेत्यर्थः; "प्रसूतिस्तनयोत्पत्योस्तथा दुहितरि स्मृता" इति विश्वः; मया, प्रसिक्तं—तेभ्यो दत्तम्, उदकं—तर्पणजलम्, धौतः—क्षालितः अश्रुसेकः—बाष्पबिन्दुर्येन तद् यथा स्यात्तथा, उदकविशेषणं वा, धावधातोः क्ते ऊठि "एत्येधत्यूठ्सु" इति (पा०) वृद्धिः, नूनं—निश्चितमेव, पिबन्ति । बत इति खेदे ।

तथा च तर्पणकाले उदकपानायोपविष्टानां पितॄणां स्वस्वक्रोडोपर्युत्तानभावेन संस्थापिते पाणियुगले नयनयोः सरलोदूर्ध्वदेशस्थिततया तेभ्यः पतितैरश्रुबिन्दुभिर्मद्दत्ततर्पणजलानि प्रक्षालितान्येव भवन्ति; तानि च ते पिबन्तीति भावः ।

एवञ्च पितरो मत्परं पिण्डाभावमुत्प्रेक्ष्य शोकजनितबाष्पप्रवाहेण गण्डं तदनु अधरमपि प्लावयिष्यन्ति; मदर्पिततर्पणजलमासाद्य चामेध्यं तमश्रुप्रवाहं प्रक्षाल्यावशिष्टं पास्यन्तीत्यहो कष्टमिति समुदितार्थः ।

"धौताश्रुशेषम्" इति पाठे;—धौतमश्रु येन करणेन तद्धौताश्रु ततः शेषम् । मद्दत्तेन जलेन प्रथममश्रु क्षालयित्वा पश्चात्तच्छेषं जलं पितरः पिबन्तीति सम्भावयामीत्यर्थः । यथा रघौ;—

"मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते" ॥ इति ।

अत्र नूनमित्युपादानात् वाच्याभावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः । वाक्यार्थहेतुकं काव्यलिङ्गमपि ।

न चात्र इति शब्दात् परं चिन्तयित्वेति पदमाकांक्षितं तस्य तु अनभिधानात् न्यूनपददोष आपततीति वाच्यम्; वक्तुर्विषादमग्नत्वात्;

"उक्तावानन्दमग्नादेः स्यान्न्यूनपदतागुणः"

इति विश्वनाथोक्तेः । वसन्ततिलकावृत्तम् ॥ २७ ॥

द्वारा दिये हुये तर्पणजल को पियेंगे सही, पर हमारे उस तर्पणजल को वे आँसुओं के जलमें मिला हुआ समझेंगे ॥ २७ ॥

अणुहोदि राएसी (१) ।

चेटी—भट्टा ! अलं सन्दाविदेन, वअत्थो ज्जेव पहू अवरासु देवीसु अणुरूबपुत्तजम्मेण पुव्वपुरुसाणं अणिणो भविस्सदि । [आत्मगतम्] ण मे बअणं पडिच्छदि । अणुरूबं वि ओसधं आदङ्कं णिअत्तेदि (२) ।

(१) हा धिक् हा धिक् ! सति खलु दीपे व्यवधानदोषेण अन्धकारमनुभवति राजर्षिः ।

(२) भर्त्तः ! अलं सन्तापितेन, वयस्थ एव प्रभुः अपरासु देवीषु अनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणो भविष्यति । न मे वचनं प्रतीच्छति । अनुरूपमपि औषधम् आतङ्कं निवर्त्तयति ।

(१) मिश्रेति । अथ मिश्रकेशी राज्ञस्तादृशीमवस्थामवेक्ष्य सकरुणमाह;—हाधिगित्यादि । व्यवधानदोषेण;—व्यवधा —दूरता अन्तर्द्धिर्वा स एव दोषस्तेन । तथा च दीपस्य यथा विद्यमानतायामपि दूरत्वादिदोषजुष्टत्वाल्लोकोऽन्धकारमनुभवति तथाऽयं राजर्षिः शकुन्तलागर्भस्थस्य सन्तानस्य सद्भावेऽपि अन्तर्द्ध्यादिदोषजुष्टतयाऽनपत्यतादुःखमनुभवतीत्याशयः ।

अत्र प्रस्तुते शकुन्तलागर्भस्थसन्तानरूपे विशेषे वक्तव्ये अप्रस्तुतेन दीपादिना तस्य कथनादप्रस्तुतप्रशंसालङ्कारः ।

असम्भवद्वस्तुसम्बन्धरूपा निदर्शनानाम्नालङ्कारः इत्यन्ये ।

केचित्त्वत्र ललितोऽलङ्कार इति वदन्ति ।

(२) चेटीति । प्रबोधयति;—अलमिति । सन्तापितेन—शोकेन सन्तापी-

(१) मिश्र—हाय ! हाय ! दीपक के रहते हुए भी बीच में पर्दा पड़ जाने के कारण ये राजर्षि इस समय अन्धकार का अनुभव कर रहे हैं।

(२) चेटी— महाराज ! आप अपना जी न दुखाइए । क्योंकि आपकी अभी अवस्था है । और और रानियों के गर्भ से अपने अनुरूप पुत्र उत्पन्न करके पितरोंके ऋण से मुक्त हो जाइयेगा । ( स्वगत ) ये मेरी बात तो सुनते ही नहीं, क्योंकि योग्य औषधि ही रोग को नष्ट करने में समर्थ होती है ।

[राजा—शोकनाटितकेन] (१) ।

कृतेनात्मनेति शेषः । वयस्थः—वयसि—यौवने तिष्ठतीति यः सत्वादृशः—युवक एव; न तु वृद्ध इत्येवकारार्थः, तथा च ते पुत्रोत्पादनशक्तिरक्षुण्णैवास्तीति भावः, "वयस्थस्तरुणो युवा" इत्यमरः, प्रभुः—स्वामी भवानित्यर्थः, अपरासु—शकुन्तलेतरासु, तस्याः पुनः प्राप्त्यसम्भवादिति भावः, देवीषु—कृताभिषेकमहिषीषु, अनुरूपपुत्रजन्मना—आत्मसदृशपुत्रोत्पत्त्या, पूर्वपुरुषाणां—पितॄणाम्, अनृणः—ऋणविमुक्तो भविष्यति । तथा च श्रुतिः;—

"एष वै अनृणो यः पुत्री यज्वा ब्रह्मचारी च, ब्रह्मचर्य्येण ऋषिभ्यः, यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति । स्मृतिरपि;—

"ऋणं देवस्य यागेन ऋषीणां दानकर्म्मणा ।
सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत्" ॥ इति ।

शंखलिखितपैठीनसियना अप्याहुः;—

"यत्र क्वचन जातेन पिता पुत्रेण नन्दति ।
तेन चानृणतां याति पितॄणां पिण्डदेन वै" ॥ इति ।

विष्णुधर्म्मोत्तरञ्च;—

"श्राद्धेन प्रजया चैव पितॄणामनृणो भवेत्" । इति ।

आत्मगतम्—अनतिस्पष्टम् । मम तु हीनजनतया तादृशं प्रबोधनं वाक्यमस्मै नैव रोचत इति मत्वाह;—न मे इति । प्रतीच्छति—गृह्णाति; मद्वचः न राजा नैवाश्वासनायुक्तो भवतीत्यर्थः, अपिरत्र सम्भावनायाम् । तथा च सम्भावयामि अनुरूपम्—उपयुक्तम्, औषधं कर्तृ, आतङ्कं—रोगम्, निवर्त्तयति—विनाशयति; विनाशयिष्यतीत्यर्थः, वर्त्तमान सामीप्ये लट् । तथा च अनुरूपमौषधं यथा रोगं नाशयति तथा विदूषककर्त्तृकानुरूपोपदेश एवास्य सन्तापं नाशयिष्यति न पुनर्हीनाया मम वचनेनेत्याशयः ।

अत्र भवतामनुरूपाश्वासनाकरो माधव्य एव न पुनरहमिति प्रस्तुते विशेषे वक्तव्ये अप्रस्तुतमुखेनाभिधानादप्रस्तुतप्रशंसाऽलङ्कारः ॥

(१) राजेति । नाटितमेव नाटितकम्, स्वार्थे कः, शोकस्य नाटितकं—नाट्याभिनय शोकनाटितकं तेन शोकनाटितकेन—शोकाभिनयेनेत्यर्थः ।

(१) राजा—(शोक का अभिनय करके)—

आमूलशुद्धसन्तति कुलमेतत् पौरवं प्रजावन्ध्ये ।
मय्यस्तमितमनार्य्ये देश इव सरस्वतीस्रोतः ॥ २८ ॥

[इति मोहमुपागतः] (१)

आमूलेति । आमूलात्—आदितः, पुरुवादिपुरुषाच्चन्द्रमसः; अन्यत्र प्रथमोत्पत्तिदेशात्; आरभ्य शुद्धा—अकलङ्किता निषेकादिसंस्कारपरिपूता; अन्यत्र पवित्रा; सन्ततिः—पुत्रपौत्रादिसन्तानपरम्परा; अन्यत्र धारा; यस्य तत् तादृशम्, "सन्ततिः स्यात् पंक्तौ गोत्रे पारम्पर्य्ये पुत्रपौत्राणाम्" इति मेदिनी, पौरवं—पुरुसम्बन्धि, अन्यत्र भूयिष्ठम्, "प्रभूतं पुरु भूयिष्ठम्" इत्यमरः, एतत् कुलं—अयं वंशः, प्रजावन्ध्ये—निःसन्ताने; अन्यत्र जनशून्ये पर्वतारण्यादिप्राये इति यावत्, "प्रजा स्यात् सन्ततौ जने" इत्यमरः, अनार्य्ये—अप्रशस्ते अन्यत्र आर्य्यजातिरहिते म्लेच्छैरध्युषिते वा, मयि—दुष्मन्ते, तथाविधे देशे, तथाभूतं सरस्वतीस्रोत इव;—सरस्वत्याः—तदाख्याया नद्याः स्रोतः—प्रवाहस्तदिव, अस्तम्—अदर्शनम् इतं—गतम्, विलुप्तमित्यर्थः, "अस्तमदर्शने" इत्यमरः। अन्यत्र शोषं गतम् । तथा चेदमतीवदुःखकरमिति भावः । अत्र सरस्वतीस्रोतः पक्षप्रसिद्धः, पौरवकुलपक्षश्च लोपे अप्रसिद्धः इति बोध्यम् ।

अत्रोपमानोपमेयसादृश्यनिबन्धना श्रौती पूर्णोपमालङ्कारः । सा च पौरवादिश्लिष्टपदघटितत्वात् श्लेषसङ्कीर्णा ।

तथात्र शोभा नाम नाट्यलक्षणमुपक्षिप्तम् । तल्लक्षणं यथाः—

"सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते ।
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते" ॥

इति साहित्यदर्पणे ।

आर्य्या जातिः ॥ २८ ॥

(१) इतीति । मोहं—मूर्च्छाम्, "मूर्च्छा तु कश्मलं मोह" इत्यमरः ।

जैसे कि जिस देश में आर्यजाति के लोग नहीं होते, वह देश निर्मल सरस्वतीस्रोत की भांति नष्ट होजाता है। उसी तरह यह पुरुवंश आदि से अब तक शुद्धसन्तानयुक्त था, किन्तु मुझ निर्वंशी और पापी से ही उस उज्ज्वल वंश का अन्त होरहा है ॥ २८ ॥

(१) (ऐसा कह कर मूर्छित होजाता है)

चेटी—[ससम्भ्रमम्] समस्ससदु समस्ससदु भट्टा (१) ।

मिश्र—किं दाणिं ज्जेव णिव्वुदं करेमि । अघवा सुदं मए सउन्तलं समस्ससन्तीए देवजणणीए मुहादो जणभाअसमुस्सुआओ देवाओ ज्जेव तह अणुचिट्ठिस्सन्ति, जह सो भट्टा अइरेण धम्मप-दिणीं तुमं अहिणान्दिस्सादित्ति । ता ण जुत्तं मे एत्थ विलम्बिदुं, जाव इमिणा वुत्तन्तेण पिअसहीं सउन्तलं समस्सासेमि । [इत्युद्भ्रान्तकेन निष्क्रान्ता] (२) ।

(१) समाश्वसितु समाश्वसितु भर्ता ।

(२) किमिदानीमेव निर्वृतं करोमि, अथवा श्रुतं मया शकुन्तलां

"संरोपिते" इत्यादिना एतदन्तेन मूर्च्छारूपोपान्त्यकामदशा दर्शिता । चरमदशा-यास्तु प्रत्युज्जीवनसम्भावनामन्तरेणावर्णनीयत्वान्नाटके प्रतिषेधाच्चेत एव विरहवर्ण-नानिवृत्तिः । अत्रैव कविना कामदशावर्णना परिसमाप्तीकृता ।

तथा चोक्तम्;—

रसविच्छेहेतुत्वान्मरणं नैव वर्ण्यते ।
जातप्रायन्तु तद्वाच्यं चेतसा कांक्षितं तथा ।
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥ इति ।

दशविधाः कामदशाः प्रागेव दर्शिताः । ताश्च गणनया तत्रैव द्रष्टव्याः । किञ्च 'पश्चात्तापसदृशवेषः' इत्यादिना 'मोहमुपागतः' इत्यन्तेन वर्णितस्य राज्ञः पश्चात्ता-पस्य परमा काष्ठा अत्रैवोपसंहृता इत्यपि बोध्यम् ॥

(१) चेटीति । ससम्भ्रममिति । सम्भ्रमो राज्ञो मोहावस्थादर्शनेन । सत्वरं व्यस्ततासहितं वेत्यर्थः ।

(२) मिश्रेति । मिश्रकेशी राज्ञस्तादृशीं शकुन्तलाविरहजनितामतिशो-

(१) चेटी—( घबड़ाहट के साथ ) महाराज ! धैर्य धरिये—धर्य धरिये ।

(२) मिश्र—क्या अभी ही इन्हें प्रसन्न करदूँ ? नहीं, शकुन्तला को आश्वासन देते समय मैंने अदिति के मुख से सुना था कि—'यज्ञभाग पाने के लिये स्वयं देवगण ऐसा

समाश्वासयन्त्या देवजनन्या मुखात् यज्ञभागसमुत्सुका देवा एव तथा अनुष्ठास्यन्ति; यथा स भर्ता अचिरेण धर्म्मपत्नीं त्वामभिनन्दिष्यतीति तन्न युक्तं मे अत्र विलम्बितुम्, यावदेतेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि

---

चनीयामुपान्त्यदशामवलोक्य भृशं व्याकुलितैव भूत्वाऽऽह;–किमिति । निर्वृतं—शकुन्तलावृत्तान्तनिवेदनेन सुखितम्; एवं राजानमिति शेषः । अथ शकुन्तलावृत्तान्तविज्ञापनेन राज्ञः समाश्वासने विहितेऽपि यदि तस्य तत्र विश्वासो नैव भवेदित्याशङ्कया पूर्वोक्तमाक्षिप्याह;—अथ वेति । न निवेदयामीत्यर्थः । कुत इत्यत्राह;—श्रुतमित्यादि । शकुन्तलां—पतिविरह( तिरस्कार )दुःखितामिति तात्पर्य्यम्, समाश्वासयन्त्याः—सम्यगाश्वासनापात्रीकुर्वन्त्याः, देवजनन्याः—अदितेः; मुखात्, यज्ञभागसमुत्सुकाः;—यज्ञभागाय—यज्ञभागग्रहणाय समुत्सुकाः—उत्कण्ठिताः, यज्ञभागाभिलाषिण इत्यर्थः, देवाः तथा—तेनैव रूपेण अनुष्ठास्यन्ति—विधास्यन्ति । यथा—येन रूपेण, स भर्त्ता—स्वामी राजा दुष्मन्तः । त्वां—शकुन्तलाम् । अभिनन्दिष्यति–आदरपूर्वकं ग्रहीष्यति, इति मया श्रुतमित्यनुषङ्गः।

तथा च सम्प्रति शकुन्तलार्थमेव पर्य्याकुलतया राज्ञो यज्ञानुष्ठानासम्भवात् भविष्यत्यपि दुष्मन्तात परमस्मिन् भूमण्डले सत्यराजके स्वभोग्ययज्ञभागलोपाच्च स्वार्थसम्पादनार्थमेव देवा आग्रहीष्यन्तीति भावः ।

अत्रानेन वाक्येनेन्द्रप्रयुक्तो मातलिप्रवेशोऽनन्तरभाव्यः सूचितः ।

उद्भ्रान्तकेन—गतिविशेषेण, निष्क्रान्ता—प्रस्थिता, मिश्रकेशीति शेषः । उद्भ्रान्तकलक्षणमाह सङ्गीतसुधानिधौ;—

"पूर्वं दक्षिणमुत्थाप्य पश्चादाकुञ्चयत पदम् ।
वामं शीघ्रं भवेद् वामावर्त्तमुद्भ्रान्तकं वदुः" ॥ इति ।

---

करेंगे, जिससे वह राजा धर्मपत्नी कह कर तुम्हें आदरपूर्वक स्वीकार करेगा।' इस लिये अब हमको यहां देर करना ठीक नहीं है। चलूं, यह प्रिय वृत्तान्त सुनाकर प्रिय सखी शकुन्तला को ढाढ़स बँधाऊँ ( ऐसा कह कर चुपके से चली जाती है )

[नेपथ्ये]—भो ! अब्बह्मणं अब्बह्मणं (१) ।

राजा—[प्रत्यागतचेतनः कर्णं दत्त्वा] अये ! माधव्यस्येवार्त्तनादः (२) ।

चेटी—सो णाम माधव्वो तवस्सी पिङ्गलिआमिस्सिआहिं चेडिआहिं चित्तफलअहत्थो पाविदो भवे (३) ।

राजा—चतुरिके ! गच्छ, मद्वचनादानिषिद्धपरिजनां देवीमुपालभस्व (४) ।

---

(१) भोः ! अब्रह्मण्यम् अब्रह्मण्यम् ।

(३) स नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभिश्चेटिकाभिश्चित्रफलकहस्तः प्राप्तो भवेत् ।

---

(१) नेपथ्ये इति । अत्र नायकं रसान्तरे प्रवेशयितुं मातलिप्रवेशमुत्थापयति । अब्रह्मण्यमिति । ब्रह्मणे साध्विति ब्रह्मण्यं न ब्रह्मण्यमित्यब्रह्मण्यम्, ब्राह्मणवधस्य पापजनकत्वादवध्योऽहमिति भावः, "अब्रह्मण्यमवध्योक्तौ" इत्यमरः, "तत्र साधुः" इति(पा०)सूत्रेण यत्प्रत्ययः, अनन्तरं विरोधार्थकनञा तत्पुरुषसमासः ।

(२) राजेति । प्रत्यागतचेतनः—पुनर्लब्धसंज्ञः, विगतमोह इति तात्पर्य्यम्, अये इति सम्भ्रमे । आर्त्तनादः—आपन्नकरुणशब्दः ।

(३) चेटीति । नामेति सम्भावनायाम् । सः—मेघाच्छन्नप्रासादगतः, तपस्वी—अनुकम्पार्हः,माधव्यः—तदाख्यो ब्राह्मणो विदूषकः, चित्रफलकहस्तः—चित्रफलकं हस्ते यस्य सः, धृताङ्कितशकुन्तलाचित्रफलकः सन्नित्यर्थः, पिङ्गलिकामिश्रिताभिः—पिङ्गलिका—तदाख्या देव्या वसुमत्या दासी तया मिश्रिताभिः—मिलिताभिः, चेटिकाभिः—अन्याभिर्दासीभिः, कर्त्तरि तृतीया, प्राप्तः—आक्रमितः ।

(४) राजेति । मद्वचनात्—मम वचनमाश्रित्य, ल्यब्लोपात् कर्म्मणि

---

(१) नेपथ्यमें—ओरे—ओरे ! मैं अवध्य हूं, अवध्य हूँ ।

(२) राजा—( होश में आ और कान देकर ) एं ! यह तो मानों माधव्य का आर्तनाद है !

(३) चतुरिका—मैं समझती हूँ कि हाथ में चित्रपट लिये आते हुये दुर्बल माधव्य पर पिंगलिका आदि दासियों ने आक्रमण किया है ।

(४) राजा—चतुरिका! तू जा और मेरी जबानी रानी को डाँट कर कह कि उन्होंने

[चेटी—निष्क्रान्ता]

[नेपथ्ये—भूयः स एव शब्दः] (१)।

राजा—परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः। कः कोऽत्र भोः! (२)।

[प्रविश्य कञ्चुकी] आज्ञापयतु देवः।

राजा—निरूप्यतां किमेवं माधव्यब्राह्मणः क्रन्दतीति (३)।

---

पञ्चमी, राजैवं वक्तीत्युक्त्वा इत्यर्थः। अनिषिद्धपरिजनाम्;—न निषिद्धः—दुर्व्यवहारान्न निवारितः परिजनः—स्वपरिचारकलोकः चेटीजन इत्यर्थः; यया ताम्, उपालभस्व—तिरस्कुरु, तमेव हेतुं दर्शयित्वेति भावः। तथा च तव परिचारिकाभिर्माधव्यब्राह्मणोपरीदृशमन्याय्यमाचर्य्यते तत्र त्वया न किञ्चिद् प्रतिविधीयते एष ते क आचार इति दुर्वाक्यं वदेत्याशयार्थः।

( १ ) नेपथ्य इति। भूयः—पुनरपि, स एव शब्दः—अब्रह्मण्यमब्रह्मण्यमिति करुणध्वनिः।

( २ ) राजेति। परमार्थतः—यथार्थतः, प्रकृत्यादित्वात्तृतीयायां तसिल्, भीतिभिन्नस्वरः;—भीत्या—भयेन भिन्नः—स्वाभाविकेतरः स्वरः—कण्ठध्वनिर्यस्य सः, ब्राह्मणः—माधव्यः, अनेन तस्य रक्षणीयत्वं ध्वन्यते। तथा चैतस्य निरूपणं कार्य्यमिति भावः। अत्र—अस्मिन् स्थाने, कः कोऽस्तीति शेषः।

( ३ ) राजेति। किं—कथम्, एवम्—अनेन रूपेण, क्रन्दति—आर्तनादं करोति, इति निरूप्यतां—निश्चीयताम्।

---

—इस तरह छेड़ती हुई अपनी सहचरियों को रोका क्यों नहीं।

चतुरिका—( चली जाती है )

( १ ) नेपथ्यमें—( फिर उसी तरह आर्तनाद सुनाई पड़ता है. )

( २ ) राजा—सचमुच, मारे भय के उस ब्राह्मण की आवाज भर्रा गई है। यहाँ कौन है ?

कंचुकी—( आकर ) महाराज ! आज्ञा दीजिए।

( ३ ) राजा—देखो तो वह माधव्य ब्राह्मण क्यों चिल्ला रहा है।

कञ्चु—यावदवलोकयामि। [इति निष्क्रम्य ससम्भ्रमं पुनः प्रविष्टः] (१)।

राजा—पर्वतायन ! न खलु किञ्चिदत्याहितम् (२) ।

कञ्चु—नैवम् (३) ।

राजा—ततः कुतोऽयं वेपथुः । तथा हि—( ४ ) ।

प्रागेव जरसा कम्पः सविशेषस्तु सम्प्रति ।
आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः ॥ २९ ॥

( १ ) कञ्चु इति । यावत्—यद् भूतमित्यर्थः, अवलोकयामि—तदवलोकनं करोमीत्यर्थः । ससम्भ्रमं—सोद्वेगम् ।

( २ ) राजेति । पर्वतायन !—कञ्चुकिन् ; पर्वतायन इति कञ्चुकिनो नामधेयम् । खल्विति प्रश्ने, अत्याहितं—महाभयम् , जातं किमित्यर्थः । "अत्याहितं महाभीतिः" इत्यमरः । अत्र काकुः प्रश्नो व्यज्यत इति कश्चित्, तच्चिन्त्यम् , खलुशब्दस्य प्रश्नव्यञ्जकत्वेन प्रयुक्तत्वात् ।

( ३ ) कञ्चु इति । नैवं—न किञ्चिदत्याहितमित्यर्थः । तथा च शत्रुकर्तृकराजधान्यादेराक्रमणे तु भूरिप्राणिविनाशशङ्कयाऽत्याहितं भवति; प्रकृते एकस्य माधव्यस्याक्रमणे खलु न तादृशमित्याशयः ।

( ४ ) राजेति । ततः—तदा, अत्याहिताभावेऽपीत्यर्थः, वेपथुः—तव गात्रोत्कम्पः, वेपधातोष्टित्वादथुच् प्रत्ययः । तथा दर्शयितुमाह;—तथा हीति ।

कारणोपन्यासपूर्वकं वेपथुमेव व्याचष्टे;—प्रागेवेति । जरसा—वार्द्धक्येन, प्रागेव—इतः पूर्वमेव, कम्पः—वेपथुः, आसीदिति शेषः, सम्प्रति—इदानीं तु, सविशेषः—अधिकः सन् , मारुतः—वायुः, अश्वत्थं—पिप्पलनामानं महावृक्षमिव "बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः, अश्वत्थेऽथ" इत्यमरः, स-

( १ ) कंचुकी—देखता हूँ । ( जाकर और घबड़ाहट के साथ फिर वापस आता है ).
( २ ) राजा—पर्वतायन ! कुछ बड़ा गड़बड़ तो नहीं हुआ ?
( ३ ) कंचुकी—नहीं ।
( ४ ) राजा—फिर काँपते क्यों हो ?—
पक तो बुढ़ापे के कारण वैसे ही काँप रहे थे, पर इस समय और भी कँपकँपी है।

कञ्चु—परित्रायतां सुहृदं महाराजः ( १ ) ।

राजा—कस्मात् परित्रातव्यः ? ( २ ) ।

कञ्चु—महतः कृच्छ्रात् ( ३ ) ।

---

वाङ्गं—त्वदीयं सर्वावयवं प्राप्येति शेषः, आविष्करोति—सर्वावयवावच्छेदेनात्मानं प्रकाशयति ।

तथा च यदि अत्याहितं नासीत् तर्हि कथं येदृशस्यागन्तुकस्य कम्पस्यावसरः इति भावः ।

अत्राश्वत्थस्य स्वभावत एव कम्पनस्वभावत्वाद्वायुनोदितस्य तु तस्यात्यर्थकम्पनात् सादृश्यभाव इति मन्तव्यम् । अत एवात्रोपमालङ्कारः, स च श्रौतः ।

नन्वत्राविष्कारस्य प्रकाशार्थत्वात् फलवत्त्वाविवक्षयाऽकर्म्मकत्वेन सर्वाङ्गपदस्य कर्म्मत्वं न सम्भवतीति चेन्न;

"कालाध्वभावदेशानामन्तर्भूतक्रियान्तरैः ।
सर्व्वैरकर्म्मकैर्योगे कर्म्मत्वमुपजायते" ॥

इति प्राचीनोक्तेरधिकरणस्यापि तस्य कर्म्मसंज्ञायामव्याघातात् ।

अत्र चासीदादिपदानामनुक्तत्वेऽपि न न्यूनपदतादोषः परन्तु गुण एव वक्तुरुद्वेगमग्नत्वात् ।

यदुक्तं दर्पणे;—

"उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" । इति ।

पथ्यावक्त्रं वृत्तम् ॥ २९ ॥

( १ ) कञ्चु इति । परित्रायतां—परिरक्षतु, सुहृदं—माधव्यम् ।

( २ ) राजेति । कस्मात्—किमभिधानात्पदार्थादिति तात्पर्य्यम् ।

( ३ ) कञ्चु इति । कृच्छ्रात्—विपत्तेः ।

---

जिसतरह कि वायु अश्वत्थ के समस्त अंगों में व्याप्त होकर अपना अस्तित्व प्रगट करताहै । उसी तरह तुम्हारे में भी इस समय बहुत ज्यादा कम्प दिखाई पड़ता है ॥ २९ ॥

( १ ) कंचुकी—महाराज ! अपने मित्र को बचाइए ।

( २ ) राजा—किस से बचाऊं ?

( ३ ) कंचुकी—बड़ी भारी विपत्ति से ।

राजा—अये ! भिन्नार्थमभिधीयताम् ( १ ) ।

कञ्चु—योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम ( २ ) ।

राजा—किन्तत्र ? ( ३ ) ।

कञ्चु—तस्याग्रभागाद्गृहनीलकण्ठैरनेकविश्रामविलङ्घ्यशृङ्गात् ।

सखा प्रकाशेतरमूर्त्तिना ते केनापि सत्त्वेन निगृह्य नीतः ॥२०॥

---

( १ ) राजेति । अये इति विरक्तिसूचकं सम्बोधनम् । तच्चास्पष्टभाषणात् । भिन्नः अर्थो यस्मिंस्तद्यथा स्यात्तथा, स्पष्टार्थं स्पष्टतरमिति यावत् ।

( २ ) कञ्चु इति । दिगवलोकनप्रासादः;—दिशामवलोकनाय कश्चित् कुतश्चिद् वा राजधान्याक्रमणायागच्छति किमिति शंकायां पर्य्यवेक्षणाय निर्मितः प्रासादः—हर्म्म्यमिति विग्रहार्थौ ।

अत्रेदानीन्तनवत्तदानीमपि राजधान्यादौ दिगवलोकनार्थमत्युच्चगृहनिर्म्माणप्रथाऽऽसीदिति द्योत्यते ।

( ३ ) राजेति । तत्र—मेघाच्छन्नप्रासादे किं वृत्तमिति शेषः ।

कञ्चु इति ।

तस्येति । गृहनीलकण्ठः—गृहपालितमयूरैः, "मयूरो बर्हिणो बर्हीं नीलकण्ठो भुजङ्गभुक्" इत्यमरः, अनेकविश्रामैः—एकवारेणारोहणाय कुण्ठितसामर्थ्यात् पुनः पुनः विश्रामकरणैर्विलंघ्यानि—अतिक्रमणीयानि श्रृङ्गाणि—शिखराणि यस्य तस्मात्, एतेनात्युच्चत्वं ध्वन्यते, "श्रृङ्गं प्रभुत्वे शिखरे" इति मेदिनी, तस्य—मेघच्छन्नप्रासादस्य, अग्रभागात्—उपरितनालिन्दात्, प्रकाशेतरमूर्त्तिना;—प्रकाशेतरा—अप्रकाशा अलक्ष्या मूर्त्तिर्यस्य तेन तथाभूतेन—विद्याविशेषप्रच्छन्नाकृतिनेत्यर्थः, केनापि—अदृश्येन, सत्त्वेन—रक्षःपिशाचादिजन्तुना "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति विश्वः, ते—तव, सखा—माधव्यः, निगृह्य—पराभूय सनि-

---

( १ ) राजा—ऐ ! साफ साफ कहो ।

( २ ) कंचुकी—दिशाओं को देखने के लिये वह जो मेघच्छन्न प्रासाद है—

( ३ ) राजा—हां, तो वहाँ क्या है ?

कंचुकी—घर में पाले हुये मयूर अनेक बार सुस्ता कर जिस के सब से ऊपर के भाग में

राजा—[ सहसोत्थाय ] । आः, ममापि सत्त्वैरभिभूयन्ते गृहाः ? अथवा बहुप्रत्यवायं नृपत्वम् (१) ।

अहन्यहन्यात्मन एव तावत् ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयातीत्यशेषतः कस्य पुनः प्रभुत्वम् ॥३१॥

---

ग्रहं घृत्वा, नीतः—अन्यत्स्थानं प्रापितः ।

एतादृशक्षुच्छ्रान्माधव्यं परित्रायतामित्यभिप्रायः ।

अत्र मेघाच्छन्नप्रासादस्यात्युच्चत्वस्य भङ्ग्यन्तरेण प्रत्यायनात् पर्य्यायोक्तमलङ्कारः ।

"पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते"

इति तल्लक्षणस्य दर्पणोक्तत्वात् ।

उपजातिर्वृत्तम् ॥ ३० ॥

( १ ) राजेति । सहसा—हठात्, उत्थाय आसनादिति शेषः, सक्रोधमाह;—आ इति । इदं कोपसूचकमव्ययम् । ममापि—दुष्मन्तस्यापि, अत्रात्मनिर्देशेन स्वस्य वीरत्वादिकं प्रत्याय्यते, सत्त्वैः—रक्षःपिशाचादिभिर्जन्तुभिः, अभिभूयन्ते—आक्रम्यन्ते, अत्याचारगोचरीक्रियन्त इति यावत् । गृहाः—सद्मानि; तत्स्थिता लोका वेति तात्पर्य्यम् , अत्र "गृहाः पुंसि च भूम्न्येवे"त्यमरवचनात् पुंस्त्वम् । आश्चर्य्यं दुःसाहसं सत्त्वानामित्याशयः ।

प्रजाकृतकर्म्मणः षष्ठांशभागित्वाद्राज्ञस्तथा सम्भवत्येवेति पूर्वोक्तमाक्षिप्याह;—अथवेति । बहुप्रत्यवायम् ;—बहवः—नानाविधाः प्रत्यवायाः—विहितानुष्ठानलंघनजनितानि पापानि यस्मिन् तत् तादृशम् , नृपत्वं—राजधर्म्मः, राजकार्य्यमित्यर्थः ।

नृपत्वस्य बहुप्रत्यवायत्वे कारणमप्रस्तुतमुखेन दर्शयति;—अहनीति ।

---

जा सकेंगे, उसी मेघच्छन्न प्रासाद के सब से ऊपरवाले हिस्से से आकर कोई अदृश्य आकृति का जन्तु आप के मित्र को पकड़ ले गया है ॥ ३० ॥

( १ ) राजा—हमारे घर के लोगों पर भी जन्तुओं आक्रमण होता है ? अथवा राजकार्य में बहुतेरे पाप होते ही हैं—

प्रमाद वश मनुष्य रोज-रोज त्रुटि करता हुआ भी अपनी सभी त्रुटियों को नहीं

[ नेपथ्ये ] अविधावेहि भो ! अविधावेहि (१) ।

राजा—[ आकर्ण्य गतिभेदं रूपयन् ] सखे ! न भेतव्यं न भेतव्यम्(२) ।

---

( १ ) अभिधाव भोः ! अभिधाव ।

---

अहनि अहनि—प्रतिदिनम्, वीप्सायां द्विरुक्तिः, आत्मन एव—स्वस्यैव, अन्यस्य का कथेति तात्पर्य्यम्, तावत्—साकल्येन, प्रमादस्खलितम्;—प्रमादेन—अनवधानतया जातं स्खलितं—दुराचरणं त्रुटितमिति यावत्, ज्ञातुं—निर्णेतुम्, न शक्यम्; मादृशैर्नृपैरिति शेषः। अत्र स्वस्य प्रमादघटितं शकुन्तलापरित्यागं मनसि कृत्यात्मनः प्रमादस्खलितमित्युक्तम्। अथ पुनः—किन्तु, प्रजासु—प्रकृतिषु स्वराज्यवासिजनेष्विति यावत् मध्ये; निर्द्धारणे सप्तमी, कः—जनः, केन—न्याय्येन अन्याय्येन वा पथा—मार्गेण, प्रयाति—गच्छति, कः किमाचरतीत्यर्थः, इत्येतत्; अशेषतः—कात्स्न्र्येन, प्रकृत्यादित्वात्तृतीयायाः सार्वविभक्तिकस्तसिल्, ज्ञातुम्—अवधारयितुम्, अत्राप्यस्यानुषङ्गाऽस्तीति बोध्यम्, कस्य—नृपस्य, प्रभुत्वं—शक्तिरस्तीति शेषः, काका कस्यापि नेत्यर्थः।

तथा चात्मनः प्रमादस्खलनात् प्रजानामन्याय्याचरणाद् वा समुद्भूतेन प्रत्यवायेनैव मद्गेहेऽपीदृशी सत्त्वबाधेति भावः।

प्रजाकृतादपि पापान्नृपस्यापि पापयुक्त्वमाह भगवान् मनुः;—

"सर्वतो धर्म्मषड्भागो राज्ञो भवति रक्षतः।
अधर्म्मादपि षड्भागो भवत्यस्य ह्यरक्षतः॥" इति।

अत्र काव्यार्थापत्तिस्तदुत्थापिताऽप्रस्तुतप्रशंसा च। मतिर्भावः। उपजातिर्वृत्तम्॥ ३१॥

( १ ) नेपथ्य इति। अभिधाव—मां लक्षीकृत्य द्रुतमायाहि। संभ्रमे द्विरुक्तिः। अनेन वीररसं पोषयति।

( २ ) राजेति। गतिभेदं—धावनमिति तात्पर्य्यम्। न भेतव्यमिति

---

समझ पाता, तो फिर प्रजा में से कौन मनुष्य किस रास्ते आता है, यह सब बात जानने की शक्ति भला किस राजा में हो सकती है॥ ३१॥

( १ ) नेपथ्यमें—ओ मेरी तरफ आओ—मेरी तरफ आओ!

( २ ) राजा—( सुनकर जल्दी जल्दी चलने का अभिनय करते हुये ) मित्र! मत डरो-

[ नेपथ्ये ] भो ! कधं न भाइस्सम् । एसो मं कोवि पच्चामोडिअ सिरोधरं इक्खु विअ भग्गत्थि कारिदुमिच्छदि (१) ।

राजा—[ सदृष्टिक्षेपम् ] धनुर्धनुः (२) ।

[ प्रविश्य धनुर्हस्ता प्रतीहारी ] जअदु जअदु भट्टा । एदं ससरं सरासणं हत्थावारओ अ (३) ।

( १ ) भोः ! कथं न भेष्यामि । एष मां कोऽपि प्रत्यामोड्य शिरोधराम् इक्षुमिव भग्नास्थिं कर्त्तुमिच्छति ।

( ३ ) जयतु जयतु भर्त्ता । एतत् सशरं शरासनं हस्तावारकश्च ।

सखाश्वासनपरम् । भयं न कर्त्तव्यमित्यर्थः ।

( १ ) नेपथ्ये इति । कथं न भेष्यामि—भयं न करिष्यामि । कोऽपि—अनिर्णीतः पुरुषः, शिरोधरां–ग्रीवाम् , प्रत्यामोड्य—पश्चादुमोडयित्वा, मां इक्षुम्–इक्षुदण्डमिव, भग्नास्थिं—खण्डितम् । "ग्रीवायां शिरोधिः कन्धरेत्यपि" इत्यमरः । 'भग्नास्थिम्' इत्यत्र "त्रिभङ्गम्" इति पाठे;—त्रिखण्डमित्यर्थः । अत्रोपमालङ्कारः, क्वचिच्च 'तीक्ष्णभङ्गम्" इति पाठः;—तत्र भङ्गः—परिभवः; इक्षुपक्षे भञ्जनम् ।

( २ ) राजेति । सदृष्टिक्षेपं—माधव्याह्वानदिशि दृष्टिपातपूर्वकम् । धनुर्धनुरिति क्रोधे द्विरुक्तिः, आनयेति शेषः ।

( ३ ) प्रविश्येति । शरासनम् ;—शरान् अस्यतीत्यनेनेति विग्रहः, धनुरित्यर्थः । हस्तावारकः;—हस्तं–पाणिमावृणोति—ज्याघातनिवारणायाच्छादयतीति सः, लौहनिर्मितहस्तावरणविशेषः । अत्र हस्तावापसहितमिति पाठे;—हस्तावापेन—लौहनिर्मितहस्तावरणविशेषेण सहितमिति धनुर्विशेषणं बोध्यम् ।

मत डरो—

( १ ) नेपथ्यमें—डरूँ क्यों नहीं ! यह कोई व्यक्ति मेरी गर्दन मरोड़ कर हड्डियों को ऊँख की तरह चूर—चूर कर देना चाहता है ।

( २ ) राजा—( देखकर ) धनुष लाओ धनुष !

( ३ ) प्रतीहारी—( हाथमें धनुष लिये आती है ) महाराज की जय हो, जय हो । यह धनुष बाण और हस्तावरण प्रस्तुत हैं ।

राजा—[ सशरं धनुरादत्ते ] ( १ ) ।

[ नेपथ्ये ]—एष त्वामभिनवकण्ठशोणितार्थी

शार्दूलः पशुमिव हन्मि चेष्टमानम् ।

आर्त्तानां भयमपनेतुमात्तधन्वा

दुष्मन्तस्तव शरणं भवत्विदानीम् ॥ ३२ ॥

---

( १ ) राजेति । आदत्ते—प्रतीहारीहस्ताद् गृह्णाति ।

नेपथ्ये इति । एष इति । अभिनवकण्ठशोणितार्थी;—अभिनवं—सद्यो निःसरणाद् नूतनं कण्ठशोणितं—गलरक्तमर्थयति—कामयते इति स तादृशः, एषः—अहम्, शार्दूलः—व्याघ्रः "शार्दूलद्वीपिनौ व्याघ्रे" इत्यमरः, पशुं—मृगादिजन्तुमिव, चेष्टमानम्—आत्मरक्षणाय पलायितुं यतमानम्, त्वां; हन्मि—नाशयामि । अत्रोपमया मारणे प्रयासातिशयो न भविष्यतीति द्योत्यते । आर्त्तानां—पीडितानाम्, भयम् अपनेतुं—दुरीकर्त्तुम्, आत्तं—गृहीतं धनुर्धन्व वा येन स तथाभूतः, धनुःपक्षे "धनुषश्च" इति ( पा० ) सूत्रेण अनङादेशः "धनुश्चापो धन्वशरासनकोदण्डकार्म्मुकम्" इत्यमरः, दुष्मन्तः, इदानीम्—अस्मिन् मारणव्यापारे सम्प्रति, तव शरणं—रक्षको भवतु, तस्य सामर्थ्यमस्ति चेत् स रक्षत्वित्यर्थः ।

अत्र "अभिनवे"त्यादिविशेषणं शार्दूलपक्षेऽपि योज्यम् । तथा "चेष्टमानम्" इति पशुपक्षेऽपि सङ्गमनीयम् ।

अत्राहुर्भट्टाः;—

"अनेन बीभत्सरसो ध्वनितः । तल्लक्षणं तु;—

"हृद्यानां तु पदार्थानां दर्शनश्रवणादयः ।

स्वभावाद्धातुदोषाद्वा वस्त्वत्यन्ताप्रियात्मकम् ॥

स्याद्विभावोऽथाऽनुभावाद्धृत्कम्पो गात्रधूननम् ।

---

( १ ) राजा—धनुष-बाण लेता है )

नेपथ्यमें—नूतन रुधिर पीने की इच्छा रखनेवाले व्याघ्रकी तरह मैं छटपटाते हुए पशुकी तरह तुझे मारे डालता हूँ, दुखियों का भय दूर करने के लिए धनुष धारण करनेवाले दुष्मन्त में यदि सामर्थ्य हो तो आकर तेरी सहायता करें ॥ ३२ ॥

राजा—[सरोषम्] कथं मामेवोद्दिशति । आः, तिष्ठ तिष्ठ, कौणपापसद ! त्वमिदानीं न भवसि [चापमारोप्य] पार्वतायन ! सोपानमार्गमादेशय (१) ।

---

अथ सञ्चारिणो मोहावेगापस्मारमृत्यवः ।
व्याधिश्च यत्र बीभत्सः संस्थायिन्या जुगुप्सया ॥
शुद्धोऽशुद्धोऽत्यन्तशुद्धो बीभत्सस्तु त्रिधा मतः ।
आद्यौ रुधिरविष्ठादिशुद्धाशुद्धविभावजौ ॥" इति ।

दशरूपकेऽपि;—

"रुधिरान्त्रकीकसवसास्नाय्वादिभिः क्षोभणः"

इति द्वितीयो बीभत्सभेदः ।"—इति ।

आर्त्तानामित्यादि स्वाभाविकं क्रोधावेगसूचनम् ।

अत्र श्रौतोपमालङ्कारः । तथा 'लतेव राजसे तन्वि !' इति साहित्यदर्पणोद्धृतोदाहरणवत् 'अहं हन्मि शार्दूलस्तु हन्ति' पुरुषभेदेनार्थकरणाद् भग्नप्रक्रमतादोषः । तत् समाधानं तु सहृदयैर्विभावनीयम् ॥ प्रहर्षिणीवृत्तम् ॥ तल्लक्षणं तु;—

"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" ॥ इति ॥ ३२ ॥

(१) राजेति । तत्कृतस्य 'दुष्मन्त' इति नामोच्चारणद्वारा गम्भीराक्षेपस्य फलमाह;—कथमिति । मामेवेत्यात्मनिर्देशेन जगत्यद्वितीयधीरत्वं प्रकाशयते । उद्दिशति—लक्षीकृत्य वदति । आ इति कोपसूचकमव्ययम् । तिष्ठ तिष्ठेति वीप्सा रोषावेगं सूचयति । कौणपापसद !—कुणपं—शवमदन्तीति कौणपाः—क्रव्यादादयस्तेष्वपसीदति-पश्चात् वर्त्तत इति सः तत्सम्बोधने रूपम्, हेराक्षसाधम ! इत्यर्थः; "विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः । निहीनोऽपसदो जाल्म" इत्यमरः । न भवसि लक्ष्यमिति शेषः । काका प्रश्नो गम्यते; तेनेदानीं त्वं मे लक्ष्यमेव भवसीत्यर्थः । तथा च त्वामद्यैव हन्मीत्यभिप्रायः ।

---

(१) राजा—(क्रोध के साथ) ऐं, क्या हमीं को लक्ष्य कर के कह रहा है। आः राक्षसाधम ! ठहर, ठहर ! मैं अभी तुझे समाप्त किये देता हूँ। (धनुष चढ़ाकर) पार्वतायन ! सीढ़ी का रास्ता दिखाओ ।

कञ्चु—इत इतो देवः (१) ।

[ सर्वे सत्वरमुपसर्पन्ति ] ( २ ) ।

राजा—[ समन्तादवलोक्य ] अये ! शून्यं खल्विदम् (३) ।

[ नेपथ्ये ] भो ! परित्ताआहि परित्ताआहि । अहं तुमं पेक्खामि, तुमं मं ण पेक्खसि । मज्जारगहिदो उन्दुरू विअ णिरासोह्मि जीविदे(४)।

राजा—भोस्तिरस्करिणीगर्वित ! मदीयमस्त्रमपि त्वां न पश्यति? । स्थिरो भव, मा च ते वयस्यसम्पर्काद्विश्वासोऽभूत् । एष तमिषुं स-

( ४ ) भोः ! परित्रायस्व परित्रायस्व । अहं त्वां प्रेक्षे, त्वं मां न प्रेक्षसे । मार्जारगृहीत उन्दुरुरिव निराशोऽस्मि जीविते ।

"कुणपः शवमस्त्रियाम्" इत्यमरः ।

"राक्षसः कौणपः क्रव्यात्" इत्यमरोऽपि ।

( १ ) कञ्चु इति । इत इतः—पुरोवर्त्तिनानेनानेन मार्गेण, देव एत्विति शेषः ।

( २ ) सर्वे इति । उपसर्पन्ति मेघाच्छन्नप्रासादागारमिति शेषः ।

( ३ ) राजेति । समन्तात्—इतस्ततः, शून्यं—केनाप्यनधिष्ठितम् । अये इत्याश्चर्ये । इदं स्थानम्, शून्यं—सत्त्वरहितम् । तथा च क एवं विचेष्टते कं वा निहन्मीति भावः । अत्र विस्मयः ।

( ४ ) पुनरपि रसपरिपोषायाह;—नेपथ्ये इति । मार्जारगृहीतः—बिडालाक्रान्तः, उन्दुरुरिव—मूषिक इव, जीविते—जीवने, निराशोऽस्मि—निष्प्रत्याशोऽस्मि । अत्रोपमालङ्कारः, उपमया जीवितनाशस्यावश्यंभावो द्योत्यते ।

( १ ) कंचुकी—महाराज ! इधर आइए इधर ।

( २ ) सब—( शीघ्रता के साथ चले जाते हैं । )

( ३ ) राजा—( चारों ओर देखकर ) ऐं ! यहाँ तो कोई नहीं है ।

( ४ ) नेपथ्य में—मित्र मुझे बचाओ—मेरी रक्षा करो । मैं तो तुम्हें देख रहा हूँ और तुम मुझे नहीं देखते ? बिल्ली के पंजे में पड़े चूहे को तरह मैं तो जीवन से निराश होगया हूँ ।

न्दधे (१)।

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ ३२ ॥

---

(१) राजेति । तिरस्करिणीगर्वित !—तिरस्करिण्या—वपुषोऽदृश्यताकरणविद्यया गर्वितः—साहङ्कारः; तिरस्करिणीवशादहमेव सर्वं पश्यामि न कोऽपि मामिति सञ्जातगर्व इत्यर्थः, तत्सम्बोधनम्, तद्गर्वमपहरामीति भावः । न पश्यति—काक्वा पश्यत्येवेत्यर्थः । वयस्यसम्पर्कात्—माधव्येन संयोगात्, विश्वासः—माधव्याङ्गेषु पतनसम्भावनया दुष्मन्तो बाणं न निक्षेप्तुं शक्ष्यतीति प्रत्ययः, माभूत्—न भवतु । तत्कारणमाह;—एष इति । एषः—अहम्, तं—तथाविधम्, इषुं—बाणम्, सन्दधे—योजयामि ।

कीदृशोऽयमिषुः ? इति तत्स्वरूपमाह;—य इति । यः—इषुः, वध्यं—विनापि कारणेन ब्रह्महत्यायां प्रवृत्तत्वाद् वधार्हम् त्वाम्, हनिष्यति—प्रहरिष्यति; तथा रक्ष्यं—निरपराधत्वेनावश्यं रक्षायोग्यम्, द्विजं—माधव्यब्राह्मणम्, रक्षिष्यति । तमिषुं सन्दधे इति भावः । उक्तार्थेऽसम्भाव्यत्वशङ्कां परिहर्त्तुं दृष्टान्तमाह;—हंस इति । हि—तथाहि, हंसः—तदाख्यः पक्षिविशेषः, क्षीरं—दुग्धम्, आदत्ते—जलमध्याद् गृह्णाति, किन्तु तन्मिश्राः—क्षीरसम्पृक्ताः, अपः—जलानि, वर्जयति—त्यजति । तथा च स्वभाव एवायमिति भावः ।

अत्र दृष्टान्तोऽलङ्कारः । श्रौतोपमालङ्कार इति वागीशाः ।

"रक्षिष्यति द्विजम्" इत्यत्र "रक्षति च द्विजम्" इति पाठान्तरम्; तत्र;—भविष्यत्सामीप्ये लट्, रक्षिष्यतीत्यर्थः, अस्मिन् पक्षे क्रियाद्वयसमुच्चयबोधकः चकारो युक्त एव ।

अत्र रौद्रो रसो ध्वन्यते । पथ्यावक्त्रं वृत्तम् ॥ ३२ ॥

---

(१) राजा—ओ तिरोहित अत एव गर्वीले व्यक्ति ! क्या मेरा अस्त्र भी तुझे नहीं देख सकेगा। ठहरो ! मित्र के शरीर का संस्पर्श पाने के कारण क्या तुम बच जाओगे, तुम्हें यह विश्वास न होजाय, इसी लिए मैं ऐसा बाण चढ़ाता हूँ कि—

जो तुझ आततायी को मार डालेगा और वह रक्षणीय ब्राह्मण बचा रहेगा। जैसे दूध और पानी मिले हुए पात्र से हंस दूध ले लेता है और पानी त्याग देता है ॥ ३२ ॥

[इति शस्त्रं संधत्ते] ( १ ) ।

ततः प्रविशति मातलिर्विदूषकश्च ( २ ) ।

मात—आयुष्मन् ! (३) ।

कृताः शरव्यं हरिणा तवासुराः, शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने पतन्ति चक्षूंषि न दारुणाः शराः ॥३४॥

( १ ) इतीति । शस्त्रं—बाणम् ।

( २ ) तत इति । मातलिः—इन्द्रसारथिः ।

( ३ ) मात इति । आयुष्मन्—आयुः प्रशस्तिमन् ।

कृता इति । हरिणा—इन्द्रेण, "यमानिलेन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः, असुराः तव शरव्यं—शरमोक्षणलक्ष्यं कृताः, "लक्ष्यं लक्षं शरव्यञ्च"त्यमरः, एकेनैव शरपातेन निखिलानामसुराणां विनाशं प्रतिपादयितुं शरव्यमित्येकत्वं कृतम्, क्लीबत्वञ्च नित्यत्वात्, तत्रश्च एको वृक्षः पञ्च नौका भवतीतिवत् कृत्वा इति बहुत्वम् । यथोक्तम्;—"प्रकृतेर्विकृतेर्वापि यत्रोक्तत्वं द्वयोरपि । वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु" इति । इदं—शरासनं धनुः, तेषु—असुरेषु, विकृष्यताम्—आकृष्यताम् , न मयीति भावः; यतः सुहृज्जने—मित्रजने, सतां—प्रशस्तपुरुषाणाम् , प्रसादेन—प्रसन्नतया, सौम्यानि—सुन्दराणि "सौम्यन्तु सुन्दरे सोमदैवत" इत्यमरः, चक्षुषि पतन्ति, दारुणाः—भीषणाः, शरा न पतन्ति । अत संहितमपि शरमुपसंहृत्य सप्रसादं चक्षुरेव पातयेत्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालंकारः । 'चक्षूंषि पतन्ति

( १ ) (ऐसा कह कर बाण चढ़ाता है ।)

( २ ) ( इस के अनन्तर मातलि और विदूषक आते हैं ।)

( ३ ) मातलि—आयुष्मन् !

देवराज इन्द्रने दैत्यों को आप के बाण का लक्ष्य निर्दिष्ट कर दिया है । इस लिए आप उन असुरों के ऊपर ही यह धनुष चढ़ावें । सज्जन जन अपने बन्धुओं पर प्रसाद-सुन्दर दृष्टि पात ही कर सकते हैं, भयानक बाणका प्रयोग नहीं करते ॥ ३४ ॥

राजा—[ ससम्भ्रममस्त्रमुपसंहरन् ] अये मातलिः ! । स्वागतं देवराजसारथेः (१) ।

विदू—भो मणस्सि ! इमिणा अहं पशुमारणं मारिदुं पाविदो, भवं उण इमं साअदेण अहिणन्ददि (२) ।

मात—[ सस्मितम् ] आयुष्मन् ! श्रूयतां यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः (३) ।

---

(२) भो मनस्विन् ! अनेनाहं पशुमारणं मारयितुं प्राप्तं, भवान् पुनरिमं स्वागतेनाभिनन्दति ।

---

शरा न पतन्ति' इति शरव्यपोहनाद् शाब्दी परिसंख्यापि । तथा पूर्वार्द्धे प्रथमपादवाक्यं प्रति द्वितीयचरणवाक्यस्य हेतुत्वेनोपन्यासात् काव्यलिङ्गमलंकारश्चेति केचित् । सतां तादृशचक्षुषा सुहृज्जनसम्बन्धप्रतीतेः समालंकारोऽप्यत्र ध्वनितः ।

"तेषु विकृष्यताम्" इत्यनेन तदर्थमात्रमहमागतोऽस्मीति सूचितम् । वंशस्थविलं वृत्तम् ॥ ३४ ॥

(१) राजेति । ससम्भ्रमं—सोद्वेगम् । अस्त्रं—बाणम्, उपसंहरन्—अयोजयन् । अये इति विस्मये । "देवराजसारथेः" इति गौरवं द्योतयति ।

(२) विदू इति । सासूयमाह;—भो इति । मनस्विन् !—प्रशस्तमनाः !, सोल्लुण्ठनसम्बोधनमिदम् । प्रशंसायां विनिप्रत्ययः । असूयाकरणे कारणं दर्शयति;—अनेनेति । अनेन-मातलिना । पशोर्मारणमिव मारणं यस्मिन् कर्म्मणि तद्यथा स्यात्तथा, मारयितुं-हन्तुम्, प्राप्तः—गृहीतः । स्वागतेन-स्वागतप्रश्नेन, अभिनन्दति-आद्रियते । इदं ते महदनुचितमिति भावः ।

क्वचित् पुस्तके 'पशुमारणम्' इति स्थाने "इष्टिपशुमारम्" इपि पाठः तत्र;—यथा यागे पशुर्मार्य्यते तथेत्यर्थः ।

(३) मात० इति । सस्मितमिति । विदूषकवचनेन कौतुकोदयात्

---

(१) राजा—( घबराहट के साथ बाण धनुष से उतारता हुआ ) ओह मातलि ! देवराज इन्द्र के सारथि ! मैं आप का स्वागत करता हूँ ।

(२) विदूषक—ओ मनस्वी ! यह मुझ पशु की मौत मारना चाहता था, मगर तुम स्वागत करके इसका अभिनन्दन कर रहे हो ?

(३) मातलि—( मुस्कराते हुए ) आयुष्मन् ! जिस कार्य मे इन्द्र ने मुझे आप के पास

